त्मकेषूद्देश्यरूपेण तेषामुपकुर्वन्ति। अतो देवता अपि याग-निर्वर्तकत्वेन तत्कारकत्वेनाङ्गानि। अतस्साङ्गो यज्ञो मन्त्रब्राह्मणाभ्यां प्रतीयते ॥

ह.—मन्त्रश्च ब्राह्मणं च मन्त्रब्रह्मणे। यज्ञ इति यज्ञ-साध्यमपूर्वमभिधीयते। मन्त्रब्राह्मणशब्देन सकलस्य वेदस्य ग्रहणं। सकलो वेदः करणेतिकर्तव्यतानुबन्धस्या[1]नुष्ठेयात्मक-स्यापूर्वस्यैव प्रमाणं, न भूतार्थस्य रुद्ररोदनादेः। तस्य प्रमाणा-नपेक्षत्वात्। मन्त्रप्रतिपाद्यार्थानां ब्राह्मणविहितानामपि उपसं-हारार्थं मन्त्रग्रहणं। यथा 'इयान् प्रादेशसम्मितः' इति त्रिवृतः पवित्रस्य प्रादेशमात्रत्वम्। 'दशतैँ शक्करीर्मम' इति मन्त्रवर्णादुभाभ्यां प्रतिग्रहणं। 'उत्सादनाङ्गादङ्गादवत्तानां' इत्यु-त्सादतोवदानं। 'होतृषदना हरिताः' इति मन्त्रवर्णाद्धरितानामेव दर्भाणामुपादानं। 'नरो यत्ते दुदुहुर्दक्षिणेन' इति दक्षिणेनैव हस्तेन पीडनं। 'दशावनिभ्यः' इत्युभाभ्यामभिषवः। तथा 'विमान एष दिवो मध्य आस्ते' इति द्वाभ्यामश्मनिधाने पृश्निरश्मा निधीयते 'मध्ये दिवो निहितः पृश्निरश्मा' इति। एवंप्रकारैर्मन्त्रैरर्थवादैश्चानु-ष्ठेयोर्थः प्रतिपादितः। एवंविधा उपादीयन्ते। किंच यत्र मन्त्रेण प्रयोगरूपाभिधानं दृश्यते न च विनियोगो दृश्यते तत्र मन्त्र एव प्रमाणं। अतस्तस्यार्थस्यानुष्ठेयतेति ॥

३३. क—ननु मन्त्रानुच्चार्य विहितकर्मप्रयोगं कुर्वन्ति। [न] ततो-र्थमवगच्छन्ति। अतोनर्थका मन्त्राः। अनर्थकत्वान्नमान्त्रवर्णिकी देवता सिध्यतीत्यत आह—मन्त्रब्राह्मणयोर्वेदनामधेयम् ॥ वेद इति

[1]कर्तव्यतानुसन्धानेना.

नामधेयं वेदनामधेयं। नामैव नामधेयं।निश्श्रेयसकराणि कर्मा-ण्यावेदयन्ति वेदाः। मन्त्रब्राह्मणयोर्वेद इति नामधेयं, वेद इति समाख्या।ताभ्यां हि मन्त्रब्राह्मणाभ्यां निश्श्रेयसकराण्यग्निहोत्र दर्शपूर्णमासज्योतिष्टोमादीनि साङ्गानि कर्माण्यवबुध्यन्ते प्रतीयन्ते। व्युत्पन्नपदार्थानां यथैव ब्राह्मणवाक्यगतपदाभिहितवाक्यार्थेभ्यो नानाविधवाक्यार्थबोधः एवं मन्त्रवाक्येषु तेषां मन्त्राभिहितप-दार्थेभ्यो बहुप्रकारवाक्यार्थज्ञानं। विहितकर्मानुष्ठानकालेवश्य-मध्वर्य्वादयः संस्कारकर्मप्रतिपत्त्यानुतिष्ठेरन्। तत्प्रतिपत्तौ स्ववा-क्यानि ब्राह्मणवाक्यानि मन्त्रा इत्यनेकोपायप्रसक्तौ मन्त्रा निय-म्यन्ते। पेषणमिव पिष्टकरणे। यथा पेषणापादितपिष्टकृतपुरो-डाशयागादभ्युदयः एवं मन्त्रप्रकाशितकृतकर्मभ्यः। अतोर्थवन्तो मन्त्राः। अतोभ्यातानमन्त्रप्रकाशिनाग्नीन्द्रादयो होमानां देव-ताः। ये तु मन्त्राननुच्चार्य प्रयोगं कुर्वन्ति नि[तैः]युक्तं तत्कर्मप्रकाश-कप्रकाशितत्वात् पूर्वं मन्त्रानुच्चार्यानन्तरमनुष्ठानं। अत एव चैवं वक्ष्यति 'मन्त्रान्तैः कर्मादींत्सन्निपातयेत्' इति। एकेनैव प्रकाशितत्वान्नद्वितीयमन्त्रापेक्षेति वक्ष्यति 'एकमन्त्राणि क-र्माणि' इति। मन्त्राणां संस्कारकर्मप्रकाशकत्वादेवोहं वक्ष्यति 'विकृतौ तु यथार्थमूहः' इति। तथा हि। दर्शपूर्णमासयोः 'अग्नये जुष्टं निर्वपामि' इति, अग्निदेवताप्रकाशनसमर्थो मन्त्रः आम्नातश्चोदितः 'सौर्यं चरुं निर्वपेद्ब्रह्मवर्चसकामः' इति सौर्ययागप्रविष्टस्तत्राग्निदेवताऽभावात्तद्वाच्यग्निपदे निवृत्ते तत्र विद्यमानसूर्यदेवतावाच्यनाम्नातमपि सूर्यपदं प्रक्षिप्यते। स एवोहः। अतो मान्त्रवर्णिकी देवता सिध्यति। यत्तु मन्त्रा-र्थं नाधिगच्छन्तीत्युक्तं तदुक्तोत्तरं, पुरुषदोषो न मन्त्रदोष

इति । उक्तं च आचार्यैः " नैष स्थाणोरपराधो यदेनमन्धो न पश्यति " इति ॥

ह.—कैश्चिन्मन्त्राणामेव वेदत्वमाख्यातं । कैश्चित्कल्पसूत्राणामपि । उभयनिरासार्थोयमारम्भः । सकलस्य वेदराशेः पारायणादिषु उपसङ्ग्रहणं प्रयोजनम् ॥

३४. क—तत्र मन्त्रब्राह्मणयोर्विवेकायाह—कर्मचोदना ब्राह्मणानि ॥ साङ्गानि कर्माणि चोदयन्ति विदधति यानि यानि वाक्यानि तानि चोदनाः । तानि ब्राह्मणानि ' स्वर्गकामो यजेत ' ' वायव्यँ श्वेतमालभेत भूतिकामः ' ' व्रीहीनवहन्ति ' इत्येवमादीनि ॥

ह.—कर्म चोद्यते विधीयते याभिस्ताः कर्मचोदनाः । ' वायव्यँ श्वेतमालभेत ' इत्यादयः । ताः ब्राह्मणानीत्युच्यन्ते ॥

३५-३६. क—यदि कर्मोपदेशानि ब्राह्मणानि, कर्माणि न चोद्यन्ते [यैः] यथा 'वायुर्वै क्षेपिष्ठा' इति । 'यथातिथये प्रद्रुताय' ' यजमान मेव सुवर्गं लोकं गमयति ' ' अग्निर्वा अकामयत ' ' वसवो वा अकामयन्त ' ' आपो वा इदमग्रे सलिलमासीत् ' इत्यादिभिः तेषामब्राह्मणत्वं प्राप्नोति । अत इदमुच्यते—ब्राह्मणशेषोर्थवादः ॥ ब्राह्मणस्य विधायकस्य शेषः अङ्गमुपकारकं अर्थवादः । ' वायुर्वै क्षेपिष्ठा ' इत्यर्थवादः । ' यथातिथये ' इति निन्दा । 'यजमानमेव सुवर्गं लोकं गमयाति' इति प्रशंसा । 'अग्निर्वा' इति 'वसवो वा ' इति परकृतिः । बहुपुरुषकर्तृकं पुराकल्प इति केचित् । 'आपो वा इदमग्रे सलिलमासीत् ' इत्येषः अनिर्दिष्टकर्तृकः पुराकल्प

इत्यपरे। चकारो 'नान्तरिक्षे न दिवि' इत्येवमादीनां समुच्चयार्थः। 'वायव्यँ श्वेतमालभेत। औषसं जुहोति। एककपालमाहवनीये जुहोति। य एतेन हविषा यजते। यद्दूराहविहतँ संभारो भवति' इत्येते विध्युद्देशप्रकाराः कर्माण्युभयानि [कर्माण्यन्यानि] वार्थवादादिपदैस्तूयमानानि तैः सह विदधाति न तैर्विना। ततो विध्युद्देशानां स्तुतिपदानां चैकवाक्यभावः। अतो विधायकवाक्यब्राह्मणवाक्यानामर्थवादादयः शेषाः अङ्गान्यवयवाः॥

३५. ह—वेदस्यैव कश्चिद्भागः अर्थवादोनाम विधीयमानस्य स्तुत्या प्रतिषिध्यमानस्य निन्दया च विधायकस्य ब्राह्मणस्य शेषभूतत्वात् ब्राह्मण एवान्तर्भूत इत्यर्थः॥

३६. ह—'तद्रजतँ हिरण्यमभवत्तस्माद्रजतँ हिरण्यमदक्षिण्यमश्रुजँ हि यो बर्हिषि ददाति पुरास्य संवत्सराद्गृहे रुदन्ति' इति निन्दा। प्रशंसा 'आग्नेयी वा एषा यदजा'। परकृतिः 'इन्द्रो वृत्रमहन्' इति। पुराकल्पः 'इदं वा अग्रे नैव किञ्च नासीत्' इति पुरावृत्तमात्रकथनं। 'बबरः प्रावाहणिरकामयत' इति वा परकृतेरुदाहरणम्। एवंविधा अर्थवादा ब्राह्मणशेषत्वेन उक्ता इत्यर्थः॥

३७. क—अतस्सार्थवादेभ्यो विधायकेभ्योन्ये वाक्यशेषा अनुष्ठेयार्थप्रकाशकाः ते [ये] (मन्त्राः) 'उभावामिन्द्राग्नी' 'उरु प्रथस्व' इति ऋग्यजुषात्मका आम्नाताः त एव मन्त्राः॥

२५. ह.—उक्तलक्षणादन्ये मन्त्रा विज्ञेयाः इषेत्वेत्येवमादयः॥

३८. क.—प्रवरादीनां वाक्यैकदेशत्वेन अनुष्ठेयार्थप्रकाशकत्वेन च मन्त्रत्वं प्राप्तं पर्युदस्यति। अहे बुध्निय मन्त्रं मे गोपायेति ऋग्यजुस्सामसु मन्त्रशब्दप्रयोगात्, स्वाध्यायपाठसमाम्नातानां ऋग्यजुस्सामप्रसिद्धेः, अतस्तत्राम्नाता एव मन्त्राः। अनाम्नातास्त्वमन्त्राः। अनाम्नातास्ते के। यथेति। तेषां विविच्य प्रतिपादनायाह प्रवरोहेत्यादि। प्रवरो, भार्गवच्यावनाप्नवानौर्वजामदग्न्येति। ऊहः, सूर्याय जुष्टं निर्वपामीत्यादि। नामधेयग्रहणं। गृह्यत इति ग्रहणम्। द्विविधं नामधेयं ग्राह्यं [गार्ह्यं], नक्षत्रनामधेयं च। पुत्रस्य नाम दधातीत्यादिना कृतं ग्राह्यं [गार्ह्यं] तत्र भवति। नक्षत्रनाम च, आशास्तेयं यजमानो रौहिणः। इतिकरणादेतावतामेव मन्त्रत्वम्, न त्वेते समानविकरणादयः। यजमान इत्यादीनां तु, इति ऋचाब्दा (?) योन्यामुत्पन्नं सामोत्तरयोर्गीयमानमन्त्र एव। यत्तु यजुर्वेदाश्रयमेषामुपांशुत्वादि न तस्यामु[नु]त्पत्तिः॥

ह.—अनाम्नाता वेदे अपठिताः। ते मन्त्रा न भवन्ति। यथेत्युदाहरणनिर्देशः। प्रवर आर्षेयवरणं, आङ्गिरसायास्येत्येवमादि। ऊहो, जुष्टं निर्वपामीत्यादि। नामधेयग्रहणं, आशास्तेयं यजमानो देवदत्त इति। अमन्त्रत्वाच्चैषामन्यथाकरणे मन्त्रभ्रेषप्रायश्चित्ते न स्तः[1]। यस्तु वेदाश्रय उपांशुत्वादिः तस्यानिवृत्तिः[2]॥

३९. क.—चशब्देन अमन्त्रत्वमनुकृष्यते। 'रथशब्देन महेन्द्रस्य स्तोत्रमुपाकरोति' इति रथदुन्दुभिशब्दयोरमन्त्रत्वं। भिन्नसूत्रकरणं, पूर्वेषां मन्त्रैकदेशत्वात् मन्द्रस्वरः, रथादिशब्दस्यामन्त्रत्वाद्यथाप्राप्तस्वरः॥

---

[1]मन्त्रभ्रेषप्रायश्चित्तम् न भवति. [2]तस्य निवृत्तिः.

ह.–'रथशब्देन महेन्द्रस्य स्तोत्रमुपाकरोति'। 'दुन्दुभिशब्देन माहेन्द्रस्य स्तोत्र' मिति। तौ च मन्त्रौ न भवत इत्यर्थः। मन्त्रत्वप्रसङ्गाभावेपि मन्त्रस्य स्थानापत्त्या[1]मन्त्रधर्मप्राप्तयाशङ्कानिरासायायमारम्भः। अनयोः प्रवरादिवदुपांशुत्वादिधर्मो न भवतीति ख्यापनार्थं पृथगुपदेशः॥

४०. क.–स्वाध्यायो ग्रहणार्थमध्ययनं प्रसिद्धम्। न कर्मणि कर्मप्रयोगे। अर्थान्नरत्वात्। तत्र शिष्यस्य ग्रहणधारणं प्रयोजनम्। इहत्वभिधेयार्थप्रकाश[क]त्वम्। अतः कर्मणि नानध्ययनप्रसङ्गः। अर्थान्तरत्वादेव अन्येप्यध्ययनधर्माः प्रणवादयो न स्युः॥

ह.–वेदस्य ग्रहणार्थं गृहीतस्य च धारणार्थं च यदुच्चारणम् तत्स्वाध्याय इत्युच्यते। अनध्याय अध्ययननिषेधः स्वाध्याय एव भवति, न कर्मणि। अर्थः प्रयोजनम्। अर्थादन्यत् अर्थान्तरम्। तस्य भावोर्थान्तरत्वम्। (“ विद्यां प्रत्यनध्यायः श्रूयते न कर्मयोगे मन्त्राणाम् ” इति श्रोत्रियसंस्काराध्ययनाध्याप[न] विधेः[2]। कर्मसु प्रतिषेधोऽर्थान्तरम्।) तस्मात् प्रयोजनान्तरत्वादित्यर्थः। स्वाध्यायस्य वेदग्रहणं तद्धारणं वा प्रयोजनम्; कर्ममन्त्राणां क्रत्वर्थनिर्वृत्तिः। हेतुवचनं कर्मण्यपि प्रयोजनान्यत्वे अध्ययनप्रतिषेधार्थम्। यत्तु धर्मशास्त्रे वचनं, अमावास्यायामध्ययनाविधिप्रतिषेधार्थम्। यद्वा-अमावास्यादिषु[3]मन्त्राणाम[न]

[1]स्थानापन्नत्वमत्या.

[2]श्रोत्रियसंस्काराध्ययनाध्यायविधेः; श्रोत्रियसंस्थाध्ययनाध्यायविधेः; इति च पाठौ दृश्येते.

[3]अमावास्यादिषु न. [इति कपुस्तके]

ध्ययनप्रतिषेधः श्रुतिबलीयस्त्वेनैव सिद्धः; स्मार्तत्वादनध्ययनविधेः। अत इदं कूष्माण्डहोमादीनामविहितकालादीनां मन्त्रेष्वनध्ययनप्रतिषेधार्थम्। यद्वा—"पद्यु ह वा एतच्छ्मशानं। यच्छूद्रः। तस्माच्छूद्रसमीपे नाध्येतव्यं कदाचन" इति शास्त्रानध्ययनस्य श्रौतेषु कर्मसु निषेधार्थमिदमारब्धम्॥

४१. क.—संस्कारस्यैकस्य कर्मणः प्रकाशनार्थमेक एव मन्त्रः भवेत्॥

ह.—एकस्य कर्मण एको मन्त्र इत्यौत्सर्गिको विधिः। "या जाता ओषधयः" इति चतुर्दशभिरोषधीर्वपति इत्युदाहरणम्। तत्रैकेन मन्त्रेणैकस्या ओषधेर्वापः। तथा "देवाञ्जनमगन्यज्ञः" इति सप्त मन्त्राः षण्णामाहुतीनां प्रगीताः। तत्रान्यो[न्त्यो]विकल्पार्थः॥

४२. क.—अपिशब्देनैकमन्त्रत्वमनुकृष्यते। संख्यायुक्तानि त्रिः प्रोक्षतीत्यादीनि। चेष्टायाः पृथक्त्वं चेष्टापृथक्त्वम्। चेष्टा आवृत्तिः। निर्वर्त्यन्त इति निर्वर्तीनि। क्रियावृत्त्या परिस[मा]प्यानि। यथा अवहननं मुसलोद्यमननिपतनैर्निर्वर्त्यते। एवं चेदनपेक्षमाणानि (?) येषामेक एव मन्त्रः॥

ह.—एकमन्त्राणीत्यनुवर्तते। संख्यायुक्तानि। चेष्टाया भेदश्चेष्टापृथक्त्वम्[1]। तेन निर्वर्तन्त इति चेष्टापृथक्त्वनिर्वर्तीनि। संख्यायुक्तानि च चेष्टापृथक्त्वनिर्वर्तीनि च। संख्यायुक्तानां "त्रिः प्रोक्षणम्" उदाहरणम्। तथा "द्विरवद्यति" इति। चेष्टापृथक्त्वनिर्वर्तिनामवघातः। मुसलस्योद्यमननिपतनैर्बहुभिः

[1]चेष्टायै हेतुः पृथक्त्वम् चेष्टापृथक्त्वम्.

कर्माङ्गभूतो[1]निर्वर्तन इति । एतान्येकमन्त्राणि सकृदुच्चारितमन्त्राणीत्यर्थः ॥

४३. क.—कण्डूयनादीनां संख्यायुक्तादिपदेन[वदेक]मन्त्रत्वम्। एकस्मिन् काले प्रत्यङ्गकण्डूयने 'विषाणे विष्यैतं ग्रन्थि' न प्रत्यङ्गं मन्त्रावृत्तिः । कालव्यवाये कालव्यवधाने त्वावृत्तिरेव । 'अग्ने त्वँ सुजागृहि । विश्वे देवा अभि मामाववृत्रन्' इति स्वप्नावबोधनमन्त्रौ नैकस्यां रात्र्यामनेकस्वप्नावबोधे नैवावर्तेते । अहर्व्यवायेत्वावृत्तिरेव । एकस्यां नद्यामनेकस्मिन्नपि स्रोतसि, 'देवीराप' इति नावर्तते । नद्यन्तरे त्वावृत्तिः । एकस्मिन् काले प्रतिबिन्दु न 'उन्दतीः' इति मन्त्रावृत्तिः । कालान्तरे त्वावर्तते । एकस्मिन् दर्शनेऽनेकामेध्यदर्शने, 'अबद्धं मन' इति नावर्तते । देशान्तरे त्वावर्तते । अमेध्यं दृष्ट्वा जपतीति चोदना चातुस्वर्यार्था । कालः प्रदर्शनार्थः ॥

ह.—"विषाणे विष्यैत" मिति कृष्णविषाणयाङ्गानां कण्डूयनम् । तत्र कण्डूषु बह्वीषु युगपदुपस्थितासु न प्रत्यङ्गं मन्त्रावृत्तिः। स्वप्नः । "अग्ने त्वँ सुजागृहीति स्वप्स्यन्" इति । तत्रानेन मन्त्रेणाहवनीयमभिमन्त्र्य प्रसुप्तस्य स्वापमध्ये प्रबुद्धस्य पुनः स्वापे न मन्त्रावृत्तिः । नद्यास्तरणं नदीतरणं "देवीराप इत्यवगाहते" इति "तीर्त्वोत्तरां जपेत्" इति च नदीतरणोदाहरणम् । तत्र बहुस्रोतस्कायामपि नद्यां सकृदेव मन्त्रः । न प्रतिस्रोतसं मन्त्रावृत्तिः । अवमर्षणमभिवर्षणम् "उन्दतीर्बलं धत्त" इत्यत्रमृष्ट इति । बहुष्वपि वर्षबिन्दुषु युगपत्पतितेषु सकृदेव मन्त्रः ।

[1]भूतैरवघातो.

न प्रतिबिन्दु मन्त्रभेदः । अमेध्यम् अशुचि, श्व[1]पुरीषादि । तस्य प्रतिमन्त्रणं "अबद्धं मन इत्यमेध्यं दृष्ट्वा जपति" इति विहितम् । (अनेनैवाङ्गेन जपति चोदनात्, चानुयादिपोरूयेया[2]) बहुष्वमेध्येषु युगपद्दृष्टेषु सकृदेवाभिमन्त्रणम् । व्यवायो विच्छेदः । न व्यवेतानि कालेनाविच्छिन्नानि कालाव्यवेतानि । कालेनाविच्छिन्नेषु युगपत्कालीनेष्वित्यर्थः । कालभेदेन तेषु मन्त्रा आवर्तन्ते ॥

४४. क.—प्रयाणे प्रयोजनोद्देशेन गमने यावद्भिर्दिनैः प्रयोजनस्य निवृत्तिः परिसमाप्तिः । प्रक्रमप्रभृत्याप्रयोजननिवृत्तेरेकं प्रयाणम् । एकस्मिन्नेको मन्त्रो, 'भद्रादभि श्रेय' इति । प्रयोजनभेदे त्वावर्तते । तुशब्दाद्भोजनशयना[दि]भेदेपि न प्रयाणभेदः ॥

ह.—अर्थनिवृत्ति[त्ते]रिति वा पाठः । अर्थनिवृत्तिः प्रयोजननिवृत्तिः । 'भद्रादभि श्रेय' इत्येतदु[3]दाहरणम् । तत्र आ देवयजनप्राप्तेः सकृदेव प्रयाणमन्त्रः ॥

४५. क—येषां कर्मणामिदंतया फलं दृश्यते तानि सन्निपातीनि, स्तरणाच्छादनादीनि । यानि न तादृशानि तान्यसन्निपातीनि अभिमन्त्रणोपस्थानावेक्षणादीनि । तेष्वसन्निपातिकर्मसु च तद्वत् । यथा कण्डूयनादिष्वेकमन्त्रत्वं तथा 'अपां क्षये' इति ग्रावणामभिमन्त्रणं एकेन सर्वेषां, न प्रत्येकं मन्त्रावृत्तिः । 'अग्नीन्यजमान उपतिष्ठते', 'कल्पेतां द्यावापृथिवी', 'येग्नयस्समनस' इति तत्र सकृन्मन्त्रप्रयोगः, न प्रत्यग्न्यावर्तते ॥

---

[1]चण्डाल. [2][( )एवं चिह्नितं वाक्यं कपुस्तके नास्ति.]

[3]ति प्रयाण ड.

ह.—यानि कर्माणि द्रव्याश्रयाणि द्रव्ये प्रत्यक्षं विकारान् जनयन्ति तानि सन्निपातीनि; अवघातः पेषणं श्रपणमिति। यैस्तु द्रव्यैः [व्ये] प्रत्यक्षो विकारो नोत्पद्यते तान्यसन्निपातीनि; अभिमन्त्रणानुमन्त्रणजपोपस्थानावेक्षणानि। तेष्वपि सङ्ख्या-युक्तानि त[त्क्तादिव]द्वृत्सकृन्मन्त्र इत्यर्थः। "अपां क्षये" इति ग्राव्णामनुमन्त्रणमुदाहरणम्। तत्र सकृन्मन्त्रमुक्त्वा सर्वेषां ग्राव्णा-मनुमन्त्रणम्। (भिन्नपीठानामप्यङ्गविरोधे मन्त्रा आवर्तन्ते। यथा "सूर्यज्योतिर्विभाहि" इति पुरोडाशाभिमन्त्रणम्[1])॥

४६. क्र—एकस्मिन्नपि प्रयोगे भिन्नकालेष्ववहननादिषु हवि-ष्कृदादयो मन्त्राः आवर्तन्ते। सवनीयेषु लाजार्थं पुनर्हविष्कृदा-ह्वानमन्त्रा आवर्तन्ते। तथाग्रयणे एकोलूखलपक्षे कालभेदात् अध्रि-गु 'दैव्याश्शमितारं' इति वाजपेये सारस्वतान्तानां कृतोपि सार-स्वतप्रभृतीनामावर्तते। 'अग्नये भ्राजस्वते पुरोडाशमष्टाकपालं' 'सौर्यं चरुमग्नये भ्राजस्वते पुरोडाशमष्टाकपालं' इति अग्नये भ्राजस्वते हविर्द्वयं विहितम्। तस्य याज्यानुवाक्यायुगळं सूर्य-यागविहितत्वादावर्तते। पुरोनुवाक्याग्रहणं प्रदर्शनार्थम्। स कृत्स्नो याग आवर्तते। मनोताप्यध्रिगुवद्वाजपेय आवर्तते। इतरेषां काल-भेदेपि तन्त्रत्वमेव। वैश्वदेवे हविष्कृत्तन्त्रत्वम्। सान्नाय्ये स्विष्टकृति याज्यानुवाक्या तन्त्रेण प्रयुज्यते। अध्रिगुर्मनोता चैकादशिन्यां॥

ह.—हविष्कृदिति "हविष्कृदेहि" इत्यवहननमन्त्रोभि-धीयते, अनेन हविः क्रियत इति। अध्रिगुरिति 'दैव्याश्शमितारः' इति। पूर्वं याज्यायाः सम्प्रैषादनन्तरं योच्यते सा पुरोनुवाक्या।

[1][( ) एवं चिह्नितं वाक्यं क. पुस्तके नास्ति.]

मनोता, "त्वँ ह्यग्ने" इत्यनुवाकः । हविष्कृच्चाध्रिगुश्च पुरोनुवाक्या च मनोता च हविष्कृदध्रिगुपुरोनुवाक्यामनोतमिति द्वन्द्वैकवद्भावः । हविष्कृतः पशुतन्त्रवर्तिनः सवनीया उदाहरणम् । तेषु कालभेदाद्धविष्कृदावर्तते । तथा नानाबीजेषूलूखलमुसलयोस्तन्त्रपक्षे कालभेदादावर्तते । हविरासादनादि तण्डुलप्रस्कन्दनान्तमेकैकस्य हविषः तदादि क्रियत इति । अध्रिगुः वाजपेये सारस्वत्यन्तानामेव, सवनीयकालालम्भपक्षे । सारस्वतप्रभृतीनां, ब्रह्मसामोपाकरणानन्तरालम्भपक्षे । कालभेदादावर्तते । पुरोनुवाक्याग्रहणेन अवदानादिप्रक्षेपान्तो[1] यागप्रचारो लक्ष्यते । तस्य "अग्नये भ्राजस्वते पुरोडाशमष्टाकपालम्" इत्युदाहरणम् । तत्र सौर्यव्यवधानादाग्नेययोः सम्प्रतिपन्नयोरप्यवदानादि पुरोनुवाक्यासहितो यागप्रचार आवर्तत इत्यर्थः । मनोतायाश्च वाजपेये सारस्वत्यन्तानाम् सारस्वतप्रभृतीनां च कालभेदेन हविःप्रचारपक्षे आवर्तते । हेत्वर्थोयं सप्तमीनिर्देशो द्रष्टव्यः ॥

४७. क—एकमन्त्राणीत्यस्यापवादः । वचनादेकं कर्मानेकमन्त्रं भवति । उत्क्रामोदक्रमीदिति द्वाभ्यामुत्क्रमयति । चतुर्भिरभ्रिमादत्त इति । यत्र वचनं नास्ति लिङ्गक्रमप्राप्ताभ्रिग्रहणार्थं मन्त्रविकल्पः ॥

ह.—वचनं "चतुर्भिरभ्रिमादत्ते" इति । तत्र बहुभिर्मन्त्रैः एकमादानं क्रियत इति ॥

इति प्रथमः खण्डः.

[1]पुरोनुवाक्यासहितो.

१. क—मन्त्रप्रकाशितानुष्ठितस्य कर्मणो निःश्रेयसकरत्वान्मन्त्रोच्चारणेन भवितव्यं। अनन्तरं कर्मणामन्तो न। मन्त्रान्तकर्माद्योः सन्निपातस्सङ्गमो नैरन्तर्यं स्यात् ॥

ह.—मन्त्राणामन्ताः मन्त्रान्ताः। कर्मणामादयः कर्मादयः। सन्निपातस्सङ्गमः। यत्र स्वाहाकारो वषट्कारो वा मन्त्रस्यान्ते प्रयुज्यते, तत्र ताभ्यामेव कर्मादिसन्निपातः ॥

२. क—आघारमन्त्राद्योस्संयोगस्सहभावः। धारामन्त्राद्योश्च। आघार इति होमनाम। तस्मादाज्यं द्रव्यम्। "समारभ्य" इति मन्त्रप्रकाशित इन्द्रो देवता। तत्रेन्द्रमुद्दिश्याहुतिमात्रमाज्यं प्रदेयम्। तत्रादिसंयोग उक्तो नान्तसंयोगः। एवं होमसिद्धिर्भवति। मन्त्रोच्चारणसमकाले यद[यो]न्त्यक्षणं[णः] तत्त[सत]स्य होमस्येतिकर्तव्यता। वसोर्धाराशब्दश्चानेकेषां मन्त्राणां होमानां नामधेयम्। तेषां च घृतं द्रव्यम्। "वाजश्च मे प्रसवश्च मे" इत्यादिमन्त्रप्रकाशिता वाजप्रसवाद्या देवताः। तत्र नैरन्तर्येण मन्त्रा उच्चार्याः। अविच्छेदेन च धारा प्रस्रावयितव्या। तत्र प्रकाशितदेवतायै द्रव्यम्। यावदुत्तरोत्तरमन्त्रपरिसमाप्ति तत्तन्मन्त्रान्ते तत्तन्मन्त्रप्रकाशितदेवतायै आहुतिमात्रं घृतं देयम्। आघारवदादिमन्त्रोच्चारणकाले यद्घृतधाराकरणं तद्धाराकरणान्तरस्येतिकर्तव्यता ॥

ह.—आघारस्स्रुच्यादिः। धारा वसोर्धारादिः। आघारे धारायां च सन्ततश्रुतिर्दृश्यते। तत्र कर्मादेर्मन्त्रादेश्च संयोगो भवति; सन्ततश्रुतिमूलत्वादादिसंयोगस्य ॥

३. क—इह शास्त्रे मन्त्रादिनोपदिष्टेन कृत्स्नोयं मन्त्र उपदिष्टो वेदितव्यः ॥

ह.—आदिः प्रदिष्टो येषां ते आदिप्रदिष्टाः । इह सूत्रे 'प्रेयमगात्' इत्यादयो मन्त्राः आदिमात्रनिर्देशाः, न कृत्स्नपठिताः । यद्वा वेदविषयेयं परिभाषा । वेदवदेव सूत्रेष्वपि द्रष्टव्या । पारक्षुद्रगतानां मन्त्राणां कृत्स्नपाठो वाक्यावसाननिवृत्त्यर्थः । तथाप्यादिप्रदेशो[1] वाक्यावसानमेव, 'लोकोसि स्वर्गोसि' इत्यनुवाकेन प्रतिमन्त्रमिति । 'यदस्य पारे रजसः' इति पाशुकप्रायश्चित्ते वाक्यावसानेनैव कर्तव्यम् । न चाग्निकाण्डगतस्यायं विनियोगः; प्रकरणान्तरगतत्वात् ॥

४. क—उत्तरस्य मन्त्रस्यादिना निर्दिश्यमानेन पूर्वस्य मन्त्रस्यावसानमन्तं जानीयात् । "प्रेयमगात्" इति मन्त्रो यावत् "देवानां परिषूतमसि" इति, अयं मन्त्रो यावत "देवबर्हिः" इति ॥

ह.—आदिमात्रपठिता इह मन्त्रा इत्युक्तम् । कस्तेषामन्त इत्याह—'उत्तरस्यादिना पूर्वस्यावसानं विन्द्यात्' । प्रकरणान्तरविनियोगात्पूर्वस्यान्त इति ज्ञानम् । यथा 'महीनां पयोसि' इति 'दुग्धम्' इत्यन्तेन पृषदाज्यस्य ग्रहणम्; 'यावती द्यावापृथिवी' इति दधिघर्मे[2] विनियोगात् । 'अग्नेर्भस्मास्यग्नेः पुरीषमसि' इत्यन्तेन सम्भारनिर्वपनम्, 'अग्नेर्ह्येतत्पुरीषं । यत्सम्भाराः' इत्यर्थवाददर्शनात् । 'दिवो वा विष्णो' इति 'उत-

---

[1]क—तत्राप्यादिप्रदेशे.

[2]ख. ग—दधिग्रहे. [अयं पाठः असाधुः; सूत्रे दधिघर्म एव विनियोगात्.]

सव्यात् ' इत्यन्तो मन्त्रः, [' आशीर्यदनयर्चा '][1] इति श्रुतेः ॥

५. क—अकर्मकरणाः क्रियमाणानुवादिनो मन्त्रा होत्रा उच्यन्ते । ' उच्छ्रयस्व वनस्पते ' इत्यादयः उच्छ्रीयमाणयूपानुवादिनस्समुच्चीयन्ते । याजमानेषु समुच्चयः । ' वसन्तमृतूनां प्रीणामि ' ' एको ममैका तस्य ' इति ॥

ह.—होत्रा होतृकर्तृकाः[2] क्रियमाणानुवादिनो मन्त्रा अभिधीयन्ते । याजमानास्त्वनेकवेद आम्नाताः । होत्राश्च याजमानाश्च होत्रायाजमानास्तेषां समुच्चयो वेदितव्यः । ' उच्छ्रयस्व वनस्पते ' इति यूपोच्छ्रयणार्था होत्रा ऋचः । सुब्रह्मण्यानुमन्त्रणं च स्तोत्रशस्त्रानुमन्त्रणं च आध्वर्यवे औद्गात्रे च वेदे विहितं यजमान[3]स्य समुच्चीयते ।

६. क—ऐन्द्राबार्हस्पत्ये यागे ' इदं वामास्ये हविः ' इति याज्यानुवाक्यायुगळान्याम्नातानि विकल्प्यन्ते ॥

ह.—याज्याश्चानुवाक्याश्च याज्यानुवाक्याः याज्यानुवाक्ययोरपि हौत्रत्वात्प्राप्तस्य समुच्चयापवादः । अतः ' इदं वामास्ये ' इत्यनुवाक्यायुगळं याज्यायुगळं च ऐन्द्राबार्हस्पत्ये चरौ विकल्पितं ॥

७. क—याज्यानुवाक्यास्विव विकल्पः । यथा ज्योतिष्टोमे, ' एकविंशतिं ददाति षष्टिं ददाति ' इत्यत्र संख्यानां विकल्पः । न समुच्चयः, संख्यान्तरापत्तेः ॥

---

[1] क—आशीर्पयर्च. ख—आशीर्पदधर्व. ग—आशीर्पतर्या.

[2] ग—कर्मकाः. ख—कर्मकाः क्रियाः. [3] क—याजमानं.

ह.—दक्षिणासु वक्ष्यमाणस्य समुच्चयस्यायमपवादः। संख्यासु निर्दिष्टासु दक्षिणाभूतानां द्रव्याणां विकल्प इत्यर्थः। यथा 'सप्त एकविंशतिः षष्टिश्शतं' 'एका देया षड् देया' इति च ॥

८. क—क्रये सोमक्रये, 'हिरण्येन क्रीणाति' इत्यादिना द्रव्याणां समुच्चयः। परिक्रये ऋत्विग्भ्यो दक्षिणादाने, 'मिथुनौ गावौ ददाति' 'वासो ददाति' इत्यादीनां समुच्चयो भवति। संस्कारो यजमानदीक्षादि। तत्र 'वाससा दीक्षयति' 'मेखलया दीक्षयति' इत्यादीनां समुच्चयः ॥

ह.—क्रयः सोमक्रयः तत्र अजाहिरण्यादीनां समुच्चयः। परिक्रयो दक्षिणादानम्। तत्र बहूनां द्रव्याणां विनियुक्तानां समुच्चयः, यथा त्रैधातवीयायां 'हिरण्यं ददाति' इति। संस्कारः दीक्षितसंस्कारः। तत्र दण्डमेखलादीनां समुच्चयः ॥

९. क—रुद्रप्रधानं कर्म रौद्रं। रक्षःप्रधानं कर्म राक्षसं। निरृतिप्रधानं कर्म नैरृतं। पितृप्रधानं कर्म पैतृकं। एतानि कर्माणि च्छेदनादीनि च कृत्वाऽपामालम्भः कर्तव्यः। चकारात् स्मार्तमपि केशाद्यालम्भेऽपामुपस्पर्शनम् ॥

ह.—रुद्रो देवता यस्य तद्रौद्रम्। एवं राक्षसादयः। छेदनं द्वैधीकरणं। भेदनं विदारणं। [आत्माभिमर्मनं, आत्मोपकारकं कर्म।] रुद्रोपकारकं कृत्वोदकस्पर्शनं कार्यं। यथा 'यो भूतानामधिपतिः'। 'रौद्रेणानीकेन' इत्यत्र नोपस्पर्शनम्, अनीकविशेषणत्वात्। 'रक्षसां भागधेयम्' इत्यत्रोपस्पर्शनं कर्तव्यम्। 'तुषैः फलीकरणैर्देवहविर्यज्ञेभ्यो

रक्षाँसि निरभजन् तस्मान्महायज्ञः' इति बह्वृचश्रवणात् । 'वैश्वानरे हविरिदं जुहोमि' इत्यत्रोपस्पर्शनम्; पितृतृप्तिकरत्वान्मन्त्रस्य । 'शुन्धतां लोकः पितृषदनः' इति पैतृकम् । तथा 'पितॄणाँ सदनमसि' इति । छेदनभेदनयोर्धात्वन्तरोपात्तयोरपि । [तच्च] न रौद्रार्थं, उपयोक्ष्यमाणत्वात्तत्संस्कारस्य, संस्कारस्वभावत्वाच्च । 'तुषैरेव रक्षांसि निरवदयते । अप उपस्पृशति मेध्यत्वाय' इति । तथा नैरृतेष्टिकोपधाने 'मार्जयित्वोपतिष्ठते मेध्यत्वाय' इति । न चात्राङ्गिभावो बोध्यते । 'केशानङ्गं वासश्चालभ्याप उपस्पृशेत्' इति । तथा 'नीवीं च परिधायाप उपस्पृशेत्' इति । तस्मादुपरितनप्रयोगाङ्गमेतदुदकोपस्पर्शनमवधारितम् । अतस्सर्वरौद्रे सर्वराक्षसे सर्वपित्र्ये च निवर्तते । यत्र रौद्रादीनां नैरन्तर्येण वा करणं, रौद्रपित्र्याणां वा करणं, तत्रापि न प्रतिरौद्रं न प्रतिपित्र्यं वोदकस्पर्शनम्; अन्त एव सकृदुपस्पर्शनम् । पित्र्यबलिहरणोपस्पर्शनं कृत्वैव[1] रौद्रं बलिहरणमुपस्पृशेत् । तथोपनयने प्रतिदिशं केशवपने वपनान्त एवोपस्पर्शनम् । निरसने धात्वन्तरोपात्तेऽपि भवति । यथा 'वेदिकरणानि तूष्णीं परास्याप उपस्पृश्य मन्त्रेणोपस्थानम्' । धर्मशास्त्रविहितस्य केशाङ्गवाससामालम्भे उदकोपस्पर्शनस्य उपसङ्ग्रहार्थश्चकारः । यद्वा भरद्वाजोपदिष्टखननपरिलेखन[2]योरुदकस्पर्शनस्य ॥

१०. क—अग्नयः पात्राणि च यस्मिन्विह्रियन्ते स विहारः । उत्तरत उदक्पार्श्वे उपचारः अध्वर्य्वादीनां संचारः यस्य सः उत्तरतउपचारः कर्तव्यः ॥

---

[1]ख—अतः पित्र्ये बलिहरणे नोपस्पर्शनं । कृत्वैव. [2]ख—विपरिलेखन.

ह.—उपचारः क्रिया । उत्तरत उपचारो यस्य सोय-मुत्तरतउपचारः । अनिर्दिष्टदेशाः क्रियाः उत्तरतो विहारस्य कार्या इत्यर्थः । पित्र्यास्तु दक्षिणतो विहारस्य ; 'दक्षिणा वृद्धि पितृणाम्' इति वाक्यशेषात् ॥

११. क—अध्वर्य्वादिरग्निमासाद्य नापपर्यावर्तेत नानभिमुखं पर्यावर्तेत ; न तु पृष्ठतः कृत्वा सञ्चरेत् ॥

ह.—अग्निं पृष्ठतः कृत्वा यत्पर्यावर्तनं तदपपर्यावर्तनमाहुः। अग्नेरभिमुखमेव क्रियासु[1] पर्यावर्तेत इत्यर्थः ॥

१२. क—अपपर्यावर्तेतेत्यनुवर्तते । महावेद्यामप्रणीतेऽग्नौ तत्स्थानानभिमुखो न सञ्चरेत् ॥

ह.—विहारादपि नापपर्यावर्तेत । महावेद्यामग्नावप्रणीते विहारं पृष्ठतः कृत्वा पर्यावर्तनप्रतिषेधाद[या]यमारम्भः ॥

१३. क—यज्ञाङ्गानि ग्रहचमसादीनि अभ्यन्तराणि, बाह्याः कर्तारो यथा स्युस्तथा सञ्चरेत् । पत्नी यजमानश्च ऋत्विग्भ्योन्तरे स्याताम् ॥

ह.—यज्ञाङ्गानि कर्तृव्यतिरिक्तानि सर्वाणि यज्ञाङ्ग[2]द्रव्याण्यभिधीयन्ते । पारिशेष्यादेव कर्तृणां बाह्यत्वे सिद्धे, 'बाह्याः कर्तारः' इति पुनर्वचनं यजमानपत्न्योरपि बाह्या[3]ऋत्विज इति ज्ञापनार्थम् । अतः ऋत्विजामपि मुख्याज्जघन्यो बाह्य इति । उक्तं चाश्वलायनेन 'उत्तरेण होतारमतिव्रजेद्दक्षिणेन दण्डं हरेत्' इति ॥

---

[1]क—क्रियाद्वयेपि. [2]क—यज्ञार्थ. [3]ख—बाह्यत्वमिति बाह्या.

१४. क–मन्त्रवता मन्त्रेण प्रोक्षितेनाभिमृष्टेन गृहीतेन वा स्रुवादिना नात्मानमभिपरिहरेत् । अथवा मन्त्रवता मन्त्रिणा यज्ञाङ्गेनात्मानमृत्विजं नाभिपरिहरेत् । स्रुवादीनां 'अन्तराणि' इत्यबहिर्भावेपि सिद्धे, पत्नीयजमानौ मन्त्रोच्चारणान्मन्त्रवन्तौ समवाये तौ न बहिः कुर्यात्, अभ्यन्तरौ स्याताम् ॥

ह.–मन्त्रेण संस्कृतं मन्त्रवत् । मन्त्रवता तेनात्मानं न वेष्टयेदित्यर्थः । 'अन्तराणि यज्ञाङ्गानि' इत्येव सिद्धे वचनं मन्त्रेणासंस्कृताङ्गस्य हस्तस्या[1]त्मवेष्टनेपि न दोष इति ख्यापनार्थम् ॥

१५. क–प्राक् पुरस्तात्, उदक् उत्तरतः, अपवर्गः परिसमाप्तिर्येषां कर्मणां तानि प्रागपवर्गाण्युदगपवर्गाणि करोति । देवानाभिमानि दैवानि कर्माणि । दक्षिणस्य बाहोरधस्तात्सव्यबाहोरुपरि न्यस्तं कार्पासं सूत्रं यस्य स यज्ञोपवीती । अध्वर्व्यादिर्यज्ञोपवीती भूत्वा प्रदक्षिणं दैवानि कर्माणि प्रागपवर्गाण्युदगपवर्गाणि वा करोति, यथा परिस्तरणपरिषेचने । येषां प्रागपवर्गोदगपवर्गप्रदक्षिणत्वासम्भवस्तानि यज्ञोपवीती कुर्यात् ॥

ह.–अपवर्गः परिसमाप्तिः । प्राक् अपवर्गः येषां तानि प्रागपवर्गाणि । उदक् अपवर्गो येषां तान्युदगपवर्गाणि । यज्ञार्थमुपवीतं, 'अजिनं वासो वा' इति ब्राह्मणे व्याख्यातम् । देवा देवता येषां तानि दैवानि । यत्कर्म दैवं पित्र्यकर्मणोङ्गं तत्रापि

[1] क–हस्तगृहीतस्या.

देवधर्म इति ख्यापनार्थम्, कर्माणीत्यधिकवचनं । यथा साक-मेधे पित्र्येषु प्रयाजादीनां, मासिश्राद्धे आघारादेः ॥

१६. क—सव्यस्य बाहोरधस्तात् दक्षिणस्य बाहोरुपरिष्टात् यस्योपवीतं स प्राचीनावीती । दक्षिणोपवर्गः परिसमाप्तिः येषां तानि कर्माणि दक्षिणापवर्गाणि । पितॄणामिमानि पित्र्याणि अङ्गानि प्रधानानि च । तानि यजमानादिः प्राचीनावीती भूत्वा, पित्र्याणि प्रसव्यं दक्षिणतोपवर्गाणि कुर्यात् । असम्भवे प्रसव्यापवर्गाणां प्राचीनावीती कुर्यात् ॥

केचित् दर्शपूर्णमासाङ्गपित्र्येषु यज्ञोपवीतित्वमिच्छन्ति । 'उपव्ययते देवलक्ष्ममेव तत्कुरुते' इति साङ्ग्योरविशेषविधानात् ॥

अपरे तु नेच्छन्ति; विशेषेण 'पित्र्याणि' इत्युद्दिश्य सूत्रकारेण प्राचीनावीतित्वविधानात् ॥

ह.—प्राचीनमावीतं प्राचीनावीतं । तदपि 'एतदेव विपरीतं प्राचीनावीतम्' इति ब्राह्मणे व्याख्यातम् । तथा दक्षिणोपवर्गो येषां तानि दक्षिणापवर्गाणि । यत्कर्म पित्र्यं देवस्याङ्गभूतं तत्र पित्र्यधर्मो विज्ञेयः । स्मृतिसिद्धयज्ञोपवीतप्राचीनावीतयोर्भ्रेषमध्ये स्मार्तभ्रेषे[1] समस्ताभिर्व्याहृतिभिरेको होमः; 'यत्त्वविज्ञाता सर्वव्यापद्वा' इति बह्वृचश्रुतेः । अविज्ञाता ऋग्यजुस्सामाविहितत्वेन अविज्ञाता, अप्रत्यक्षश्रुतिमूलेत्यर्थः ॥

१७. क—शुल्वानि रज्जवः । येषां विवृत्तये गुणान्तरे गुणा-

---

[1] क—प्राचीनावीतयोर्भ्रेषे श्रौतप्रायश्चित्तकर्ममध्ये स्मार्तम्; अन्यत्र.

स्समस्यन्ते, यथा 'द्विगुणा पशुरशना, त्रिगुणा यूपरशना' इति। तानि प्रसव्यमप्रदक्षिणं गुणानावेष्ट्य कृत्वा प्रदक्षिणं समस्येत् परिवर्तयेत् ॥

ह.—शुल्बानि रज्जवः। समासं गच्छन्ति 'द्विगुणा त्रिवृत्त्रिगुणा' इति 'पवित्रम्' इति च; तानि पूर्वमप्रदक्षिणमावेष्ट्य प्रदक्षिणं संयोजयेत् ॥

१८. क—यान्येकगुणशुल्बानि तानि प्रदक्षिणमेवावेष्टयेत् आवर्तयेत् ॥

ह.—बर्हिस्सन्नहनमिध्मसन्नहनं चोदाहरणम् ॥

१९. क—अमावास्यायामिति सप्तमीनिर्देशः कालवचनः स्वस्मिन् काले वर्तते। अमाशब्दस्सहार्थे। यस्मिन्काले सूर्याचन्द्रमसोस्सहवासः स कालोमावास्या। अमावास्ययेति तृतीयानिर्देशः कर्मवचनः; यथा 'आग्नेयोष्टाकपालः' 'ऐन्द्राग्न एकादशकपालः' इत्येवमादीनि दर्शितानीत्येतैः कर्मभिरमावास्यायां काले यजेत। अमावास्ययेति तृतीयानिर्देशात् करणभूतयागस्साङ्गोऽमावास्यायां काले विधीयते ॥

ह.—सूर्याचन्द्रमसोस्सहवासो यस्मिन्काले भवति स कालोऽमावास्या। तस्याममावास्यया आग्नेयादिप्रधानसमुदायेन यजेत। क्षणमात्रत्वादस्य कालस्य, तावति काले साङ्गस्य प्रधानस्य प्रयोक्तुमशक्यत्वात्, यथायं क्षणः प्रयोगमध्ये भवति तथाऽमावास्यया यजेतेत्यस्योपदेशस्यार्थो वर्णनीयः ॥

यथा चन्द्रयोगो मध्यवर्तिकालो भवति, प्रधानं च तत्सन्निकृष्टं तथोपवासं वदिष्यति[1] ॥

२०. क—पौर्णमास्यामिति सप्तम्या कालनिर्देशः। यस्मिन्काले चन्द्रादित्ययोः परो विप्रकर्षस्तस्मिन् चन्द्रमाः पूर्यते। स कालः पौर्णमासी। पौर्णमास्येति तृतीयानिर्देशः। 'आग्नेयोऽष्टाकपाल ऐन्द्राग्न एकादशकपालः' इत्येवमादिभिर्निर्दिष्टानि पौर्णमासीनामकानि। अत्रापि तृतीयानिर्देशात्तया पौर्णमास्या करणभूतया साङ्गया पौर्णमास्यां काले यजेत ॥

२१. क—कलाभिः पूर्यमाणो यस्मिन् क्षणे चन्द्रमास्स पूर्णमासः। पूर्णः क्षयाभिमुखः। तस्मिन् चन्द्रादित्ययोः परो विप्रकर्षो भवति। स क्षणः पर्वसन्धिः। पञ्चदश्याः प्रतिपदश्च पूर्णमासयोगात् [पौर्णमासी] तत्क्षणयोगात् पञ्चदशी प्रतिपच्च पौर्णमासी। तदा अहर्द्वयात्मकपौर्णमास्यां 'पौर्णमास्या यजेत' इति साङ्गा पौर्णमास्यनुष्ठेया विधीयते। तत्राहर्द्वये यस्मिन्नहनि चन्द्रमाः पूर्ण उत्सर्पेत् उदेति तां पौर्णमासीं यागानुष्ठानात्पुरस्तात्पूर्वमुपवसेत्। पूर्तेरनियतकालत्वात् यस्मिन्नहन्यपराह्णे रात्रौ सन्ध्यायां वा पूर्णश्चन्द्रमाः चन्द्रादित्ययोः परो विप्रकर्षस्स पर्वकालः। तां पौर्णमासीमुपवसेत्। राका चेयम् ॥

ह.—अहरिति सप्तम्या लुक्, यस्मिन्नहनीत्यर्थः। पुरस्तादित्येतत्पदमस्मिन् सूत्रे इदानीमन्वयं न लभते; प्रयोजनाभावात्। उत्सर्पेदिति पदमन्वितमप्यविवक्षितमेव। यस्मिन्नहनि

[1] क—यथाप्रयोगमध्ये पर्वकालो भवति, प्रदानं द्वितीयासन्निकृष्टं तथोपवासं वदिष्यति,

चन्द्रमाः पूर्ण इत्यर्थः । तामुपवसेत् तस्मिन्नुपवासं कुर्यात् । पौर्णमासीमिति सप्तम्यर्थे द्वितीया । तस्योपवासविधेरयं विषयः—यदा मध्यंदिनात्परस्तात् प्रतिपत्पञ्चदश्योस्सन्धिः तदोपवासः । उत्तरेद्युरिज्या । यदाऽपराह्णे चेत् [यद्यस्यामिज्या पूर्वाह्णे चेत्] पर्वसन्धिः कर्ममध्ये न स्यात् । पु[प]रस्तान्मध्यंदिनाच्चेत् 'प्रातर्यजध्वमश्विना हिनोत । न सायमस्ति देवया अजुष्टं' इति मन्त्रवर्णेन 'पूर्वाह्णे वै देवानां' इति वाजसनेयश्रुत्या च विरुध्यते । तस्मादुत्तरभाविन्यामुपवास एवेत्यवधारितम् ॥

एतदेव सूत्रं पुरस्तात्पदेनान्वितं [अर्था]न्तरेणापि वहनीयम्[1] । प्राथम्यवचनोयं पुरस्ताच्छब्दः । यदहः पुरस्ताच्चन्द्रमाः पूर्णः यस्मिन्नहनि सूर्याचन्द्रमसोः परो विप्रकर्षस्तस्यां पौर्णमास्यां आधानानन्तरं प्रथममुपवसेदित्यर्थः । आधानानन्तरं चोत्तरभाविन्यामेव पौर्णमास्यामारम्भः । उपरितनसूत्रे वक्ष्यमाणायां पौर्णमास्यामारम्भो न लभ्यत इत्यर्थः । एवं 'यदीष्ट्या यदि पशुना' इति यथोपदिष्टकालाऽन्वारम्भणीया भवति ॥

२२. क—श्वशब्दोऽव्ययम्, आगामिदिनवाची, अधिकरणवृत्तिश्च । अन्वाधानानन्तरदिने चन्द्रमाः पूरिता चन्द्रमसः पूरणं भविता । श्वः काले पूर्वाह्णे चन्द्रमाः पूरिता चन्द्रादित्ययोः परो विप्रकर्षस्स पर्वसन्धिरिति । यागानुष्ठानात्पुरस्तात्पूर्वेद्युः पौर्णमासीमुपवसेत् । इयमनुमतिः । अपरेद्युः पर्वसन्धिर्यथा प्रयोगमध्ये भवति, तथा यजेत ॥

द.—श्वः प्रतिपत्पर्वसन्धिरिति वा पूर्वेद्युरुपवसेत् । उत्त-

---

[1] क—अर्थान्तरेपि वर्णनीयम्.

रेद्युरिज्या भवेत्। अस्योपवासविधेरयं विषयः—यस्यां पौर्णमास्यां पूर्वाह्णे सूर्याचन्द्रमसोः परो विप्रकर्षस्तस्यां पूर्वेद्युरुपवसेत् ॥

२३. क—अस्य सूत्रस्याचार्यग्रन्थः [स्यचायमर्थः]। तृतीयां पौर्णमासीं खर्विकां वाजसनेयिनः पठन्ति। द्वादशधा रात्रिं कृत्वा, द्वादशभागावशिष्टे यदा विप्रकर्षस्तां खर्विकेत्याहुः। अल्पकालावशिष्टायां रात्र्यां यदा पर्वकालः सा खर्विकेत्युच्यते। खर्वशब्दोल्पवाची। अथवा षोडशेह्नि पुरस्तान्मध्यंदिनाद्यदि स्यात्पर्वकालः सा खर्विका। षोडशेह्न्युपवासः। यात्वेषा खर्विका, यस्याश्च पूर्वाह्णे पर्वकालः, तयोस्सद्यस्कालेति संज्ञा ॥

ह.—खर्वशब्दोल्पवचनः। द्वादशधा रात्रिं कृत्वा द्वादशभागावशिष्टे यदा सूर्याचन्द्रमसोः परो विप्रकर्षस्तां खर्विकामाहुः। यद्वा षोडशेहनि यदा पुरस्तान्मध्यंदिनाद्विप्रकर्षस्सा खर्विका। तस्यामुपोष्य श्वोभूते यागः। वाजसनेयिग्रहणं मुख्यकल्पानुकल्प विवेकार्थम् ॥

२४. क—चन्द्रमाः, उपवसेत्, इत्यनुवर्तते। यस्मिन् क्षणे चन्द्रादित्ययोः परस्सन्निकर्षस्सहवासः। अमेति सहत्ववाची। स क्षणोमावास्या पर्वसन्धिः प्रतिपदः पञ्चदश्याश्च। तस्मिन् चन्द्रमा न दृश्यते। तत्क्षणयोगात् पञ्चदशी प्रतिपच्चामावास्या। तत्राहर्द्वये 'अमावास्यायाममावास्यया यजेत' इति साङ्गा अमावास्या अनुष्ठेया विधीयते। तत्राहर्द्वये यस्मिन्नहनि चन्द्रमा न दृश्यते चन्द्रादित्ययोः परस्सन्निकर्षः, स चानियत-

कालत्वादपराह्णे रात्रौ सन्ध्यायां वा स्यात्ताममावास्यामुपवसेत्। कुहूश्चेयम् ॥

ह.—यस्मिन्नहनि सूर्याचन्द्रमसोः परस्सन्निकर्षस्तस्मिन्नहन्यमावास्यामुपवसेदित्यर्थः ॥

२५. क—श्वश्चन्द्रमसं न द्रष्टारो नेक्षितारः। चन्द्रादर्शनकालः प्रतिपत्पञ्चदश्योस्सन्धिः। स कालः श्वः पूर्वाह्णे भवितेति वा पुरस्ताद्यागानुष्ठानात्पूर्वं अमावास्यामुपवसेत्। सिनीवाली चैषा ॥

ह.—श्वस्सन्निकर्ष इति वा पूर्वेद्युरुपवसेत्। पौर्णमास्यामुपवासवदेवानयोर्विषयो द्रष्टव्यः ॥

२६. क—विधीयन्त इति विधानान्यङ्गानि। एकस्याधिकारिणः स्वर्गकामादेः पुरुषस्य स्वर्गार्थं यजमानस्य यो व्यापारः स प्रकर्षेण पुरुषार्थकारित्वात् प्रकरणं। तदेकफलत्वादेकं। तत्रैकस्मिन् प्रकरणे 'दर्शपूर्णमासाभ्यां स्वर्गकामो यजेत' इति चोद्यमानानि विधीयमानानि समानाङ्गानि भवेयुः। अतो दर्शपूर्णमासयोः आग्नेयादीनां सर्वेषामुपदेशानां न परस्परं प्रकृतिविकारभावः ॥

ह.—प्रकरणं फलवदपूर्वं (प्रधानं समानविधानम्)। विधीयन्त इति विधानान्यङ्गानि। एकस्मिन् प्रकरणे चोद्यमानानि (आग्नेयादीनि) प्रधानानि समानाङ्गानि। तेषामन्योन्यं प्रकृतिविकृतिभावो नास्तीत्यर्थः। यद्वा—प्रधानान्येव समानविधानानि; न वैमृधः। वैमृधो विकृतिरेवेति व्याख्यायते ॥

२७. क–विधीयन्त इति विधयोऽङ्गानि । तानि प्रकृतेन प्रधानेन बध्यन्ते अपरुध्यन्ते। पुरुषार्थनिर्वर्तकत्वेन प्रमाणान्तरास्पृष्टापूर्वसाधनं करणम्। करणं विधीयमानं करणमित्युपकारकमपेक्षते। अङ्गान्यपि निरधिकारवाक्यविहितत्वेन प्रयोजनापेक्षाणि सन्ति, श्रुत्यादिभिः फलवत्प्रधानतादर्थ्यं प्रतिपाद्यमानानि, तदपेक्षितोपकारजनकत्वेन प्रधानेन प्रकृतेनावरुध्यन्ते ॥

ह.–प्रकरणं फलवदपूर्वमेव। तेन सन्निहिता धर्मा बध्यन्ते। यस्य फलवत्कर्मणस्सकाशे ये धर्मा आम्नातास्ते तदर्था एव सर्व इत्यर्थः। अतो दर्शपूर्णमासयोर्विहिता धर्मास्तदर्था एव; नाग्निहोत्रसौर्याद्यर्थाः ॥

२८. क–श्रुत्यादिभिर्येषामविशेषनिर्देशः विशेषसम्बन्धो नास्ति यथा प्रयाजादयस्तानि साधारणानि ॥

ह.–अनिर्देशो विशेषाश्रुतिः। अन्यस्य कारणस्याभावे सर्वेषां प्रधानानां सन्निहितान्यङ्गानि साधरणानि भवन्ति। पर्यग्निकरणादयः प्रयाजादयश्चोदाहरणम्। यद्वा–अङ्गानां प्रधानानां साधारणान्यङ्गानि। आज्यधर्मादिधर्माश्चोदाहरणम्। अतो[ते]ऽङ्गानां प्रधानहविषां च साधारणा भवेयुः। तस्मादनूयाजकाले आज्ये दुष्टे, पुनराज्यसंस्काराः क्रियन्ते ॥

२९. क–येषां श्रुत्यादिभिर्विशेषनिर्देशस्तानि यथोपदेशं व्यवतिष्ठन्ते व्यवस्थितानि भवन्ति। यथा 'अरुणया' इति क्रये, लिङ्गेन 'स्योनन्ते' इति सदनकरणे, वाक्येन 'अवीवृधेताम्' इत्यग्नीषोमीये, प्रकरणेन प्राजापत्ये, स्थानेन 'दब्धिरसि' इत्युपांशुयाजे, समाख्ययाऽध्वर्युः ॥

ह.—निर्देशो विशेषवचनं। विशेषवचनात् प्रधानविशेष एव धर्मा व्यवतिष्ठन्ते। 'पयसा मैत्रावरुणं श्रीणाति। स्रुवेण पुरोडाशमनक्ति' इति चोदाहरणम् ॥

३०. क—यद्यप्याग्नेयोष्टाकपाल इति द्रव्यपरो निर्देशः; तथाप्याग्नेय इति देवतातद्धितत्वादष्टाकपाल आग्नेयः कर्तव्यः। तस्याग्नेयत्वं यागमन्तरेण न सिध्यतीति 'आग्नेयोष्टाकपालः' इति याग एवोपदिष्टः। उपांशुयाज इति यागनाम्ना याग एवोपदिष्टः। 'अग्नीषोमीय एकादशकपालः' इत्यादिभिरपि याग एवोपदिष्टः। एतानि त्रीणि यजनानि पौर्णमास्यां काले प्रयोगे प्रधानानि ॥

ह.—अग्निर्यस्य देवता सोयमाग्नेयः। अष्टसु कपालेषु संस्कृतः पुरोडाशोष्टाकपालः। अग्नीषोमीयोपि तद्वत्। आग्नेयाग्नीषोमीयशब्दाभ्यां तत्साध्यो याग उपलक्ष्यते। एते त्रयो यागाः पौर्णमास्यां प्रधानानीत्यर्थः। उपांशुयाजस्य व्युत्क्रमेण पाठोऽग्नीषोमीयाभावेप्यसोमयाजिन उपांशुयाजो न निवर्तत इति ख्यापनार्थः ॥

३१. क—तेषां प्रधानानामङ्गान्युपकारकाणि शेषभूतानि इतरे होमाः आरादुपकारकाः। न विश्वजिद्वत्फलं कल्प्यम्। नापि रात्रिवदर्थवादस्थं फलं। 'अग्निं गृहपतिं यजति प्रतिष्ठित्यै' इत्येवमादीनां प्रधानोपकारार्थत्वेन परार्थत्वात्फलश्रुतेरर्थवादत्वं। अतः प्रधानानामङ्गान्यारादुपकारकाणि। सन्निपत्योपकारकाणां तु दृष्टप्रयोजनत्वान्नानङ्गता शङ्क्या ॥

ह.—पारिशेष्यादेव सिद्धे पुनर्वचनं 'यत्प्रयाजानूयाजा इज्यन्ते वर्मैव तद्यज्ञाय क्रियते वर्म यजमानाय' इति फलसाधनतया स्तुतानां प्रयाजादीनामङ्गत्वज्ञापनार्थम्। यद्वा- वैमृधः पौर्णमासस्याङ्गमिति ख्यापयितुमारम्भः॥

३२. क—आग्नेयैन्द्राग्नावसोमयाजिनोऽमावास्यायां काले अमावास्याशब्दवाच्यौ प्रधानभूतौ। तदङ्गमितरे इत्यनुवर्तते॥

ह.—इन्द्राग्नी देवता यस्य सोयमैन्द्राग्नः। अमावास्याया- मसोमयाजिन एतौ यागौ प्रधाने इत्यर्थः॥

३३. क—सान्नाय्यशब्देन यागसाधनभूते दधिपयसी उच्ये- ते। ताभ्यां साध्यावैन्द्रयागौ माहेन्द्रयागौ वा सोमयाजिनो द्वितीयस्थानापन्नैन्द्राग्नस्थानापन्नौ भवतः॥

ह.—सान्नाय्यमिति हविषो दधिपयसोरभिधानम्। 'इ- न्द्रस्य वृत्रं जघ्नुषः' इत्यारभ्य 'तत्सान्नाय्यस्य सान्नाय्यत्वं' इत्यन्तः सान्नाय्यशब्दप्रवृत्तेरर्थवादः। तत्साध्यौ यागौ सान्ना- य्यशब्देन लक्ष्येते। तौ द्वौ सहप्रदानत्वात् द्वितीयमित्येकवचना- न्तेन शब्देन अभिधीयेते। सान्नाय्यं सोमयाजिनो द्वितीयं प्रधानमित्यर्थः। दर्शपूर्णमासप्रकरण एव 'सोमयाज्येव सन्नयेत्' इति सोमयाजिन एव सान्नाय्ये सिद्धे, सोमयाजिन इति वचनम् पत्नीमरणे पुनर्दारक्रियायां आधाने कृते, पुनस्सोमयागादर्वा- क्सान्नाय्यप्रतिषेधार्थम्। अयं चार्थो दर्शितो मनुभाष्यकारेण 'अधिकारान्तरं पुनर्दारक्रियायां, न पुनः पूर्वाधिकारप्रसङ्गः' इति। अस्मिन्नेव विषये सान्नाय्यस्य प्रतिषेधस्स्पष्टमुक्तो

बोधायनेन । अनेनैव न्यायेन अजस्रान्वारम्भणीयादि सर्वं पुनर्दारक्रियायां प्रथमाधानवदेव क्रियते । अग्नीषोमीयोपि न क्रियते प्राक्पुनस्सोमयागात् इति ॥

३४. क—असोमयाजी ब्राह्मणः पुरोडाशद्रव्यकमग्नीषोम-दैवत्यं यागं न कुर्यात् ॥

ह.—ब्राह्मणस्येति छेदः 'आग्नेयो वै ब्राह्मणो देवतया स सोमेनेष्ट्वाऽग्नीषोमीयो भवति' इति श्रुत्यन्तरे दर्शनात् ॥

३५. क—ब्राह्मणस्येत्यनुवर्तते इत्याशङ्क्याह वर्णाविशेषेणेति । 'नासोमयाजी सन्नयेत् सन्नयेद्वा' इति यदा त्रयो वर्णा असोमयाजिनस्सान्नाय्यं यागं कुर्वन्ति, तदैन्द्राग्नयागाभावः । अमावास्यायामसोमयाजिन ऐन्द्राग्नसान्नाय्ययोर्विकल्पः । पौर्णमास्यां त्वसोमयाजिनो ब्राह्मणस्याग्नीषोमीययागाभाव एव । तद्रहितापि पौर्णमासी पुरुषार्थं साधयति । द्वयोरेव हि यागयोः पौर्णमासीशब्दवाच्यत्वमस्ति ; प्रत्येकं नामयोगात् । तस्मादग्नीषोमीयरहितावेवेतरौ पुरुषार्थं साधयतः ॥

ह.—ऐन्द्राग्नस्सन्नयतो वर्णाविशेषेण न भवति । सोमयाजिमात्रस्य न भवति ; किन्तु, असोमयाजिन एवेत्यर्थः ॥

३६. क—स्वस्य कालः स्वकालः स्वकालस्य विधौ, पितृयज्ञो नामामावास्यायामनारभ्याधीनः तस्य स्वकालो विधीयते । अग्निष्टोमे प्रवृणक्तीतिवन्न कर्मसम्बन्धः । अतः 'तस्मात्पितृभ्यः पूर्वेद्युः क्रियते' इति कालमात्रविधानादनङ्गं स्यात् ॥

ह.– पितॄणां यज्ञः पितृयज्ञः । अत्र पिण्डपितृयज्ञः पितृयज्ञ इत्यभिधीयते । 'तस्मात्पितृभ्यः पूर्वेद्युः क्रियते' इति दर्शपूर्णमासप्रकरणे दर्शनात् । कर्ममध्यवर्तित्वादङ्गत्वे प्राप्ते इदमुच्यते । अनङ्गं पिण्डपितृयज्ञस्स्यात् । कुतः? स्वकालविधानात्, 'अमावास्यायामपराह्णे पिण्डपितृयज्ञः' इति । न ह्यङ्गत्वे पृथक्कालो विधीयते, यथा प्रयाजादेः ॥

३७. क–दर्शपूर्णमासाभ्यां सह तुल्यवत्प्रसङ्ख्यानात् गणनात् तद्वदेवानङ्गम् । एवं श्रुतिः 'चत्वारो महायज्ञाः । अग्निहोत्रम् दर्शपूर्णमासौ चातुर्मास्यानि पिण्डपितृयज्ञ इति' एवं तुल्यवत्प्रसङ्ख्यानान्नाङ्गम् ॥

ह.–तुल्य इव तुल्यवत् । प्रसङ्ख्यानं परिगणनं; परिगणनादित्यर्थः । एवं हि श्रूयते 'चत्वारो वै महायज्ञाः । अग्निहोत्रं दर्शपूर्णमासौ चातुर्मास्यानि पिण्डपितृयज्ञ इति' । यद्वा–प्रसङ्ख्यानं विधानं 'अप्यनाहिताग्नेः' इत्याहिनाग्नेरनाहिताग्नेश्च तुल्यवद्विधानादित्यर्थः । अत्र ह्यनाहिताग्नेर्व्यक्तमनङ्गं पिण्डपितृयज्ञ इति । तद्वदेवाहिताग्नेरपीति ॥

३८. क–प्रतिषिद्धे अमावास्यायागे पिण्डपितृयज्ञो दृश्यते 'पौर्णमासीमेव यजेत नामावस्यां; पिण्डपितृयज्ञमेवामावास्यां प्रीणाति' इत्यमावास्यायां पिण्डपितृयज्ञमनुवदन् तदनङ्गं दर्शयति ॥

ह.–एवं हि शाखान्तरे श्रूयते 'पौर्णमासीमेव यजेत भ्रातृव्यवान्नामावास्यां पिण्डपितृयज्ञमेवामावास्यायां कुरुते' इति

दर्शे प्रतिषिद्धेपि पितृयज्ञमनुवदन् अनङ्गभावं दर्शयति । अनङ्गत्वाच्च कुण्डपायिनामयने न क्रियते, नक्षत्राधानानन्तरे च दर्शेपि क्रियते, अदृष्टचन्द्रायां प्रतिपद्यपराह्णे क्रियत इति प्रयोजनानि । तत्राहवनीयस्य न प्रणयनं, अर्थाभावात् । नित्यश्चायं पिण्डपितृयज्ञः; 'मासि पितृभ्यः क्रियते' इति श्रुतेः। मासि मासि पितृभ्यः क्रियते इत्यस्याश्श्रुतेरर्थोवधार्यते; 'तस्मादहरहर्मनुष्याः' इति वीप्साधिकारे श्रूयमाणत्वात् । वीप्सायां च नित्याधिकारोवगम्यते; यथा–' वसन्ते वसन्ते ज्योतिष्टोमेन यजेत' इति । नित्येष्वपि स्वर्गफलं केचन मन्यन्ते ॥

२९. क–अधिकारिपदसंयुक्तवाक्यनिर्दिष्टं कर्म प्रधानम् । तत् यत्र विहितं तत्राङ्गैस्सह विधीयते; यथा–'उद्भिदा यजेत पशुकामः' 'सौर्यं चरुं निर्वपेद्ब्रह्मवर्चसकामः' इति ॥

ह.–अङ्गैस्सह वर्तत इति सहाङ्गम् । अङ्गोपदेशशून्यं प्रधानं दर्शपूर्णमासादिभ्योतिदिष्टैरङ्गैरङ्गसहितं भविष्यतीत्यर्थः । सौर्यत्रिकद्रुकादय उदाहरणम् ॥

इति द्वितीयः खण्डः.

## अथ तृतीयः खण्डः.

१–२. क–सहाङ्गं प्रधानमित्यनुवर्तते । यत्प्रधानं यत्र देशादिषु स्वशब्देन वाचकेन निर्दिश्यते उपदिश्यते, तत्र

तत्सहाङ्गं विहितं प्रत्येतव्यम् । अङ्गान्यपि तत्र विहितानि जानीयात् । यथा 'प्राचीनप्रवणे वैश्वदेवेन यजेत' इति साङ्गं तत्र वैश्वदेवं । 'शरदि वाजपेयेन यजेत' इति वाजपेयस्सहाङ्गः । साङ्गस्य कर्तृविधानं 'यजमानस्स्वयमग्निहोत्रं जुहुयात्' 'पर्वणि ब्रह्मचारी जुहुयात्' इति । करणनिमित्तेपि साङ्गस्य विधानं । स्वर्गाय विहितम् अग्निहोत्रं यावज्जीवमिति जीवननैमित्तिकं साङ्गं विधीयते । अथवा साङ्गं प्रधानं 'देशे काले कर्तरि' इति । यत्र देशे काले कर्तरि निमित्ते च प्रधानं विधीयते, तत्र तानि च विहितानि भवेयुः; यथा—'प्राचीनप्रवणे वैश्वदेवेन यजेत' 'शरदि वाजपेयेन यजेत' 'यजमानस्स्वयमग्निहोत्रं जुहुयात्' 'यावज्जीवमग्निहोत्रम्' इति निर्दिष्टम् । न स्वः अस्वः । क्रियाकारकमधिकारिणः स्वम् । अधिकारी न कस्यचित् स्वम् । अस्व इत्यधिकार्युच्यते । अस्ववाची शब्दो यस्य प्रधानस्य तदस्वशब्दं प्रधानम् । यत्र प्रधानमस्वशब्दं अधिकारिपदसंयुक्तं निर्दिश्यते अपूर्वं[1] विधीयते; यथा—'उद्भिदा यजेत पशुकामः' 'सौर्यं चरुं निर्वपेद्ब्रह्मवर्चसकामः' वैश्वानरं द्वादशकपालं निर्वपेत्पुत्रे जाते' इति ॥

१. ह—सहाङ्गं प्रधानमित्यधिक्रियते । तथा उपरितनसूत्रगतं यत्पदमपि प्रतिकृष्यते । देशविशेषे कालविशेषे कर्तृविशेषे च यत्प्रधानं निर्दिश्यते, तत्स्वकीयैरङ्गैस्सह निर्दिष्टं प्रतीयादित्यर्थः । 'विषम आलभेत' इति देशस्योदाहरणम् । तत्र षड्ढोतृपश्विष्टियूपाहुत्यादयोपि विषम एव क्रियेरन् । तथा प्राचीनप्रवण एव पञ्चहोत्रादयः । 'शरदि वाजपेयेन यजेत' इति कालस्यो-

[1] ख—निर्दिश्यते तत्तस्य साङ्गमेव.

दाहरणम् । तत्र सौत्रामण्या मैत्रावरुण्याश्च शरदेव कालः । 'परिस्रजी होता भवति' इति कर्तुरुदाहरणम् । तत्र बृहस्पतिसवे साग्निचित्ये परिस्रजित्वं विधीयमानं सौत्रामण्या मैत्रावरुण्याश्चोपादीयते । यदा वाजपेयाङ्गं बृहस्पतिसवो भवति, तदापि शरत्काले क्रियते । तस्यातिदेशतो वसन्तकालः प्राप्तः । वाजपेयाङ्गस्य शरत्कालत्वादभिन्न[1]योगत्वाद्बृहस्पतिसवस्येति ॥

२. ह—'देशे काले कर्तरीति निर्दिश्यते' इति वर्तते । स्व [एव] शब्दो यस्यासौ स्वशब्द इति विग्रहः; सामर्थ्यापेक्षत्वात् स्वशब्दस्य । किञ्चित्प्रधानं स्वशब्देन गृह्यते; यथा—'सौर्यः' 'निरूढः' इति । किञ्चित्प्रधानं परशब्देन गृह्यते [यदन्याङ्गभूतं, यथा सौत्रामणी मैत्रावरुण्यामिक्षेति] प्रधानशब्दचोदितत्वादङ्गप्रधान[2]विधेः । अयमस्य सूत्रस्यार्थः; यत्र 'देशे काले कर्तरि' इति निर्दिश्यते तत्र स्वशब्दमेव निर्दिष्टं विजानीयात्, न परशब्दमित्यर्थः । 'मध्येऽग्नेराज्याहुतीः' इति देशस्योदाहरणम् । तत्र प्रधानभूता एवाहुतयो अग्नेर्मध्यदेशे विधीयन्ते । 'यदीष्ट्या यदि पशुना यदि सोमेन' इति कालस्योदाहरणम् । तत्रेष्टिपशुसोमानां निरूढसौर्यादयस्स्वशब्दा एव निर्दिश्यन्ते, न परशब्दाः सौत्रामणीमैत्रावरुण्यादय अङ्गभूताः । इष्टयः पशवो वा सहाङ्गा न निर्दिश्यन्त इत्यर्थः । अङ्गभूतत्वात्तयोर्न भवति सद्यस्कालता । तथा 'पशुबन्धेन यक्ष्यमाणष्षड्ढोतारम्' इति कर्तुरुदाहरणं । तत्र स्वशब्दा एव निरूढादयः पशुबन्धेन गृह्यन्ते, न परशब्दा अग्नीषोमीयादयः । अनन्तेषु न भवति षड्ढोता ॥

[1]क—द्भिन्न, [2]घ—प्रयोग.

३. क—अपूर्वा दर्वीहोमा न कुतश्चिद्धर्मान् गृह्णीयुः, यावदुक्तेतिकर्तव्यताका इत्यर्थः। यथा 'दशहोतारं मनसाऽनुद्रुत्याऽऽहवनीये सग्रहं जुहोति' इति। एवमादीनां न कुतश्चिद्धर्मप्राप्तिः॥

ह.—अपूर्व इति प्रकृतिरभिधीयते। न विद्यते पूर्वो यस्य सोऽपूर्वः। दर्वीति होमानां विशेषनामधेयम्; ब्रह्मौदनहोमे पाकयज्ञहोमेषु च दर्व्या होम इति अपूर्वो दर्वीहोमः न कुतश्चिद्धर्मान् गृह्णाति, यावदुपदिष्टाङ्ग इत्यर्थः॥

४. क—के पुनर्दर्वीहोमाः? किंलक्षणाः? जुहोतिशब्दश्चोदनो विधायको येषां ते होमा दर्वीहोमसंज्ञकाः। दर्वीहोमशब्दो जुहोतीति विहितहोमनामधेयम्॥

४. क—मन्त्रेण वा, देवतापदेन वा देवता उद्दिश्याज्यादीनां द्रव्याणां प्रदीयमानानामाहवनीयादिषु प्रक्षेपो होमः। तस्येदानीं सामान्येनेतिकर्तव्यतोच्यते। प्रदीयते येन प्रदानं। स्वाहाकारः प्रदानं यस्य, सः स्वाहाकारप्रदानः। यत्र मन्त्रे स्वाहाकारो न पठितस्तत्र मन्त्रस्यान्ते शुद्धदेवतापदे च स्वाहाकारो विधीयते; यथा—नारिष्टहोमे 'दश ते तनुवो यज्ञ यज्ञियाः' इति, अग्नये स्वाहेति च॥

ह.—जुहोतिशब्देन चोदना यस्य स जुहोतिचोदनः। क्वचित्प्रत्यक्षेण जुहोतिशब्देनचोदना; यथा—'नारिष्टान् जुहोति' इति। क्वचित्परोक्षेण[1]; यथा 'आघारावाघारयति' इति। स्वाहा-

[1] ग—क्वचिदनुमेयेन.

कारेण प्रदानमस्मिन्निति स्वाहाकारप्रदानः। सर्वस्यैव मन्त्रस्यान्ते स्वाहाकारः। यस्यमन्त्रस्यादावन्ते वा पठित एव स्वाहाकारस्तत्र तेनैव प्रदानम्। यत्र पुनर्मन्त्रमध्य एव स्वाहाकारः पठितस्तत्रान्ते स्वाहाकारेण प्रदानं। यथा—'देवा गातुविदः' इति। 'पुरस्तात्स्वाहाकृतयो वा अन्ये देवा उपरिष्टात्स्वाहाकृतयोन्ये' इति द्वयोरेव नियमात्। यत्रादावन्तेवा स्वाहाकारः पठ्यते, यथा—'स्वाहा त्वा सुभवस्सूर्याय' इति, यत्र वषट्कारप्रदाने मन्त्रो विहितः, यथा—'जातवेदो वपया' इति, तत्र न मन्त्रान्ते स्वाहाकारः कर्तव्यः। यत्राप्यमन्त्रको होमस्तत्रापि स्वाहाकारेणैव प्रदानम्। यथा—'अथैनेध्वर्युस्संस्रावेणाभि जुहोति' इति। यत्र तूष्णीमिति वचनं तत्र स्वाहाकारोपि नास्ति; यथा 'सकृदेव सर्वं तूष्णीं जुहुयात्' इति॥

५. क—प्रदानमित्यनुवर्तते। आज्यस्थाल्या ध्रुवाया वा आनीय स्रुवेण वा जुह्वा वा जुहोति। सकृद्गृहीत्वा सकृदेव होतव्य इत्यर्थः॥

ह—सकृद्गृहीत्वा दर्वीहोमा होतव्या इत्यर्थः। सारस्वतौ होमौ चतुर्होता चोदाहरणम्॥

६. क—यथा 'उपाकृत्य पञ्च जुहोति' इति आहुतिमाहुतिं प्रत्याहुति परिगणय्य स्रुवेण तावन्त्यवदानानि गृह्णाति। जुह्वामानीयाच्छिद्याच्छिद्य होतव्यः॥

ह—नारिष्टहोमादिष्वाहुतिगणेषु यावत्य आहुतयस्तावन्त्याज्यानि गृहीत्वा विगृह्य विगृह्य होतव्या इत्यर्थः॥

७. क—समवदानं सहावदानं पूर्वोक्तं न वा कुर्यात्कुर्यादेव वा ॥

ह.—समवदानं सर्वग्रहणमधस्तनसूत्रे विहितं न कुर्यात्, हुत्वा हुत्वा पृथगेव गृह्णीयादित्यर्थः । पूर्वसूत्रेणास्य विकल्पः ॥

८–९. क—दर्वीहोमेषु समिदभावस्स्यात् समिद्वर्जं कुर्यात् । किमविशेषेण ? नेत्याह, अग्निहोत्रवर्जं । अग्निहोत्रं वर्जयित्वान्यत्र । ननु तेषु दर्वीहोमेषु कुतस्समित्प्राप्त्याशङ्का ? उच्यते । 'यदेकां समिधमाधाय द्वे आहुती जुहोति । अथ कस्यां समिधि द्वितीयामाहुतिं जुहोति' इति अग्निहोत्रे प्रत्याहुति समिदाशङ्क्यते । तेन लिङ्गेनाहुतावाहुतौ समित्स्यादिति सर्वदर्वीहोमेषु प्रत्याहुति स्वाहाकारवत्सामान्येन समिद्विधिरस्तीत्याशङ्का । कथं तर्हि सैषा निवर्तते ? 'यद्द्वे समिधावादध्यान् । भ्रातृव्यमस्मै जनयेत्' इति निन्दितत्वात् । अग्निहोत्र एव समिद्विधानम् । अन्यत्र दर्वीहोमेषु समिदभावः ॥

८. ह—समिधोऽभावस्समिदभावः । अग्निहोत्रप्रकरणे 'यदेकां समिधमाधाय द्वे आहुती जुहोति । अथकस्यां समिधि द्वितीयामाहुतिं जुहोति' इति लिङ्गदर्शनेन सर्वेषु दर्वीहोमेषु समिधः प्राप्तिमाशङ्क्य तन्निषेधार्थोऽयमारम्भः ॥

९. ह—अग्निहोत्रस्यापि समिधः प्रतिषेधे प्राप्ते, प्रतिप्रसूयते अग्निहोत्रे समिद्भवत्येवेति ॥

१०. क—अपरेणाग्निमग्नेरपरत्रासीनः दक्षिणं जान्वाच्य भूमौ निपात्य न सव्यं नोभयम्, अनाच्यानिपात्य वा सर्वदर्वीहोमान् जुहोति । एष औत्सर्गिको विधिः ॥

ह.–अग्निमपरेण वेदेरुत्तरतः । 'नान्तराग्नी संचरन्ति' इति प्रतिषेधात्, क्वचित् 'अन्तर्वेद्यामूर्ध्वस्तिष्ठन्' इत्यन्तर्वेदिविधानाच्च । जान्वाच्येति जानु भूमौ निपात्येत्यर्थः । अनाचनमनिपतनं सङ्कुच्य वा । होमबहुत्वे प्रक्रम आरम्भप्रयोजनम् ॥

११. क–करम्भपात्राणि प्रत्यङ्मुखस्तिष्ठन् जुहोति ॥

ह.–यथा सावित्राणि समिष्टयजुरिति । सामान्यविशेषयोर्विकल्पः कैश्चिदाश्रित इति तन्निषेधार्थमारम्भः ॥

१२. क–अपरेणाहवनीयं दक्षिणाभिमुखो वेदिमतिक्रम्य प्रसव्यमुदगावृत्त उदङ्मुखो यतो मन्येतानभिक्रम्य होष्यामीति तत्रातिष्ठन् सर्ववषट्काराहुतीर्जुहोति ॥

ह.–अत्राहुतिशब्देन वषट्काराहुतयो अदर्वीहोमा अप्यभिधीयन्ते ॥

१३. क–यथावचनमेव जुहोति । यथा सौम्ये चरौ पितृयज्ञे च हवींषि ॥

ह.–यथा 'सौम्ये चरौ दक्षिणतोवदायोदगतिक्रम्य' इत्येवमादयः ॥

१४. क–आश्रुतं 'आश्रावय' इति । प्रत्याश्रुतं 'अस्तु श्रौषट्' इति । याज्यानुवाक्ये, याज्याया 'अल्पाच्तरम्' इति पूर्वनिपातत्वम् । औषधपशुसान्नाय्यानामवदानेषु उपस्तरणाभिघारणे चतुरवत्ततासंपादके । आज्यहविष्षु चतुर्गृहीतमेव । वषट्कारश्चादर्वीहोमानां–प्रधानधर्माः ॥

ह.—आश्रुतमाश्रावयतीति । आश्रुतं च प्रत्याश्रुतं चाश्रुतप्रत्याश्रुते । इज्यते द्रव्यमनयेति याज्या । अनूच्यते उद्दिश्यते देवतेत्यनुवाक्या । याज्या चानुवाक्या च याज्यानुवाक्ये । आज्यव्यतिरिक्तहविषां पुरोडाशमांससान्नाय्यादीनां उपस्तरणाभिघारणे विधीयेते । ते च हविस्संस्कारार्थे । आज्यं चतुर्गृहीतमपि चतुस्सङ्ख्यावच्छिन्नमपि प्रधानद्रव्यमेव । अतो दाक्षायणयज्ञे ऐन्द्रस्योपांशुयाजस्थानापन्नत्वात् आज्यविकारे दध्न एव चतुर्गृहीतम् । तत[1] उपस्तरणाभिघारणे न क्रियेते । आज्यस्थानापन्नत्वात् जाघन्या अपि चतुरवदानं, नोपस्तरणाभिघारणे इति ॥

१५. क—आहुतिषु कार्यासु वषट्कृते वषट्कारे कृते 'वौषट्' इति शब्द उक्ते यागे द्रव्यस्य स्रुगादिभ्यः प्रच्यावनं; वषट्कारेण वा सह ॥

ह.—सन्निपातस्सङ्गमः ॥

१६. क—सन्निपातयेदित्यनुवर्तते । वायव्यचमसादिषु सोमादौ गृह्यमाणे 'उपयामगृहीतोसि' इत्यनेन सह अस्योच्चारणकाले वायव्यादिषु सोमादिषु ग्रहणम् । पुरस्तादुपयामादिषु मन्त्रेण यावद्देवतोच्यते तावद्धारां स्रावयेत् ॥

ह.—उपयामशब्देन ग्रहेष्वैन्द्रवायवादिषु क्रियां सन्निपातयेत् संयोजयेदित्यर्थः । मन्त्रान्तेनेत्यस्यायमपवादः ॥

---

[1] क—तत्र.

१७. क.—इष्टकोपधानमिष्टकासादनम् । तच्चास्य मन्त्रस्यान्त्यपादेन प्रकाश्यते । अतः तयादेवतेनोपधानमुपक्रम्य मन्त्रान्ते परिसमापयेत् । अन्यथा मन्त्रस्यादृष्टार्थत्वप्रसङ्गः ॥

ह.—क्रियां सन्निपातयेदिति शेषः ॥

१८. क.—आधाने 'उभयानि सह निरुप्याणि' इति पवमानहविषामाग्नेयेन समानतन्त्रत्वे सति पुरोडाशगणः । प्रकृतौ निर्वापप्रभृत्यापिण्डकरणात्संसृष्टौ भागौ । तयोर्यस्यै देवतायै यो भागः यथाभागमन्त्रसामर्थ्यात्स एव भागस्तस्यै देवतायै भवति । नान्यदीयेन्यदीयं सङ्क्रामति । विकृतावपि पुरोडाशगणे 'मखस्य शिरोसि' इति पिण्डं कृत्वा, एकैकपुरोडाशभागमपच्छिन्द्यात् । यत्र बहुषु भागेषु संसृष्टेषु एकैकस्मिन्नपच्छिद्यमाने विभागमन्त्रबलादेव क्रमाद्व्यावृत्तिरितरेषां स्यात् तेभ्यश्चैतस्येति परस्परं व्यावर्तमानेषु, 'व्यावर्तध्वम्' इति मन्त्रे बहुवचनप्रयोगः कर्तव्यः । स चोहः । एकदैवत्येपि पुरोडाशगणे अवदानक्रमार्थमेवापच्छिन्द्यात् । प्रकृतावपि वैमृधस्य समानतन्त्रत्वे चोदनाबलात्केचिदूहमिच्छन्ति । अपरे तु—नानाबीजेष्विव पात्रीशूर्पभेदेनापि समानतन्त्रत्वा[1]हानिरिति नोहं कुर्वन्ति ॥

ह.—पुरोडाशानां गणः पुरोडाशगणः । अपच्छेदो

---

[1]ख—त्व.

विभागः । पुरोडाशबहुत्वे 'यथाभागं व्यावर्तध्वम्' इत्येकैकं पुरोडाशं विभजेदित्यर्थः । 'अग्नये पवमानाय पुरोडाशमष्टाकपालं निर्वपेदग्नये पावकायाग्नये शुचये' इत्युदाहरणम् । 'येन यज्ञेनेत्सेन्' इति विहितेन पुरोडाशेन चत्वारः पुरोडाशा अस्यामिष्टौ भवन्ति । तत्र 'यथाभागं व्यावर्तध्वम्' इति द्वौ पिण्डौ विभजेत् । 'यथाभागं व्यावर्तेथाम्' इति प्रकृतौ विभज्यमानमपि पिण्डद्वयमितिशङ्कया पुरोडाशगणेपि विभज्यमानयोर्द्वित्वात् अनूहमाशङ्क्य प्रकृतौ हविरभिधानत्वात्पुरोडाशगणे च हविषां बहुत्वादूहोपदेशः । यद्वा—विभज्यमानद्रव्यस्यैकत्वादेकवचनमाशङ्क्यैकस्मिन्नपि हविषि विभज्यमाने सर्वेषां परस्परेण पृथक्करणे सिद्धे बहुवचनान्त ऊह उपदिश्यते ॥

१९. क.—अपच्छिन्द्यादित्यनुवर्तते । यदोत्तमौ द्वौ भागौ परिशिष्टौ, तदा तयोरन्योन्यव्यावृत्तिमात्रापेक्षणाद्विवचनेन व्यावर्तेथामिति विभागः कर्तव्यः ॥

बहुषु पुरोडाशेष्वेकैकस्मिन्नपच्छिद्यमाने द्रव्यदेवताविषययागाद्यनुष्ठानसिद्ध्यर्थं यागचोदनाक्रमेण प्रथमायै देवतायै प्रथमो भागो द्वितीयायै देवतायै द्वितीय इत्येवं सर्वत्रावधृतेषूत्तमयोः क्रमाभावेन कस्यै क इत्यनवधारणान्निर्णायकप्रमाणान्तराभावाच्च स्वयमेव इदमस्या इति सङ्कल्पयेत् । प्रकृतावपि पुरोडाशयोरेवमेव सङ्कल्पः । अतश्शास्त्रप्रामाण्यात्तस्या एव भवति ॥

ह.—देवताया उपदेशनं देवतोपदेशनम् । इदमग्नेः पावकस्येदमग्नेश्शुचेरिति तयोरेवोत्तमयोर्देवतोपदेशनम् । पूर्वेषां क्रमादेव देवताविशेषसम्बन्धोऽसन्देहेन ज्ञायते । अतस्तयोरेवेत्युक्तम् । अत एव[1] हविष्येकस्मिन्न भवति ॥

२०. क.—चरवश्च पुरोडाशाश्च चरुपुरोडाशाः । तेषां गणस्समवायः । तत्र चरुपुरोडाशीयान् चर्वर्थान्पुरोडाशार्थांश्च प्रागधिवपनात् अधिवपनार्थं कृष्णाजिनादानात्प्राक् पृथक्करोति । बहवश्चेद्भागा बहुवचनान्तेन मन्त्रेण संविभागः । यावन्तश्चरवस्तावतामयमेको भागः । यावन्तः पुरोडाशास्तावतामपरः । यथा 'आग्नेयमष्टाकपालं निर्वपेत' 'वैश्वानरं द्वादशकपालम्' इति । अग्न्युद्वासने यथा 'धात्रे पुरोडाशं द्वादशकपालम्' इत्यादि । चरुशब्दस्तण्डुलस्वरूपसाध्यानां प्रदर्शनार्थः; यथा 'इन्द्राय हरिवते धानाः' इति । पुरोडाशशब्दश्च पेष्याणां पिष्टानां, 'पौष्णं श्रपयति' इति ॥

ह.—चरवश्च पुरोडाशाश्च चरुपुरोडाशाः । तेषां गणः चरुपुरोडाशगणः । चरुपुरोडाशार्हाश्चरुपुरोडाशीयास्तण्डुलाः। तानधिवपनात्प्रागग्रे विभजेत् । कृष्णाजिनादानस्याधिवपनाङ्गत्वात्तदादानादपि प्रागेव विभागः । अयं च विभागकालापकर्षो न्यायप्राप्त एवोपदिश्यते चरोः पेषणाभावात् । ततश्च लाजार्थेषु व्रीहिष्ववहननात्प्रागेव विभागः ॥

२१. क.—यथोक्ते विभागे कृते चर्वर्थः कश्चिद्रा-

[1]ग—स्तत्पदं

गः पुरोडाशार्थः कश्चिद्भागः । तत्र चर्वर्थो भागश्चरुदेवतानां यथास्वं पुरोडाशार्थो भागश्च पुरोडाशदेवतानां तथोपलक्षयेत् ॥

ह.—यावत्यो देवता यस्य पुञ्जस्य तावतीभिर्देवताभिस्तत्पुञ्जमुपलक्षयेदित्यर्थः ॥

२२. क.—प्रकृतौ विभक्तयोर्हविषोः किं कस्या इति सन्देहे 'इदमग्नेः' इति मन्त्रेणेदंशब्देन हविर्निर्दिश्यते, अग्नेरिति षष्ठ्या देवता च । तस्यास्स्वत्वेन हविः प्रतिपादितम् । विकृतावपि विभक्तयोश्चर्वर्थपुरोडाशार्थयोः हविस्सङ्घयोः हविषां सङ्कीर्णत्वेन भेदाग्रहणाद्देवतार्थद्रव्यप्रतिपादनपरो मन्त्रगत इदंशब्द एकैकं सङ्घं तन्त्रेण निर्दिशति । असङ्कीर्णत्वाद्देवतानां प्रतिदेवतं देवतापदावृत्तिः । यथा देवताहविष्षु 'इदं धातुरिदमनुमत्या राकायास्सिनीवाल्याः कुह्वाः' इति । तथाग्न्युद्वासने 'इदमग्नेर्वैश्वानरस्य वरुणस्याग्नेरप्सुमत इदं मित्रस्य' इति ॥

ह.—बह्वीनां देवतानामपीदंशब्दस्सकृदेव प्रयुज्यते । देविकाहवींष्युदाहरणम् । तत्राग्नेयेन सह षड्ढवींषि भवन्ति । तत्रैवमुपलक्षयेत् 'इदमग्नेर्धातुः' इति पुरोडाशार्थं [1]पुञ्जम् । 'इदमनुमत्या राकायास्सिनीवाल्याः कुह्वाः' इति चर्वर्थम् ॥

२३. क.—'चरुपुरोडाश' इत्यादिसूत्रत्रयमनुवर्तते । वैश्वदेवहविर्गणे चरुपुरोडाशा व्यतिषक्ताः अन्योन्यं व्यवहि-

[1] ख—र्थमर्थ.

ताः । तेषु व्यतिषक्तेष्वपि प्रागधिवपनाद्विभागः, यथादेवत-मुपलक्षणम्, इदंशब्दस्य च तन्त्रता । यथा-'इदमग्नेस्सवितुः पूष्णो मरुतां द्यावापृथिव्योः इदं सोमस्य सरस्वत्याः' इति । चर्वादिगणे च चर्वर्थानां पूर्वं देवतोपदेशनम् ॥

ह.—अनन्तरसूत्रमनुवर्तते । व्यतिषक्ता नामान्तरिताः पुरोडाशाश्चरुभिश्चरवः पुरोडाशैरिति । एवं व्यतिषक्तेष्व-पीदंशब्दस्तन्त्रं भवेत् । वैश्वदेवमुदाहरणम् । तत्र द्वौ पुञ्जौ कृत्वा एवमुपलक्षयेत् 'इदमग्नेस्सवितुः पूष्णो मरुतां द्यावापृथिव्योः' इति पुरोडाशार्थं पुञ्जम् । 'इदं सोमस्य सरस्वत्याः' इति चर्वर्थम् ॥

२४. क.—इदानीं चरुधर्मा उच्यन्ते । कपालाना-मुपधानकाले 'धृष्टिरसि' इत्यादि प्रतिपाद्य प्रथमेन क-पालमन्त्रेण चर्वर्थां स्थालीमुपदधाति । चरुसम्बन्धात् त-त्स्थपणार्था स्थाली चरुरित्युच्यते ।

मन्त्रसन्नाम ऊहः । पाकसाधनचरुस्थाली यद्यपि चरुशब्देनाभिधीयते, तथापि पुल्लिङ्गेन मन्त्रसन्नामः चरु-पाकसाधनत्वाच्चरुशब्द एवासन्नतर इति तत्सामानाधिकर-ण्यं युक्तम् ॥

ह.—स्थालीपरत्वेन 'ध्रुवासि' इत्यूहो मा भूदित्यूहो-पदेशः ॥

२५. क.—पिष्टानामुत्पवनकाले चरुमुपधाय तण्डुलानु-त्पुनाति ॥

ह.—यद्यपि प्रकृतौ पिष्टेषु प्रणीतानां सेचनं, तथाप्यापस्तण्डुलेषु न प्रक्षेप्तव्याः । यजुरुत्पूता अपः स्थाल्यामासिच्य, तासु तण्डुलान् प्रक्षिपेरन्, तथैव प्रसिद्ध ओदनपाको लोक इति । एवञ्च 'आग्नावैष्णवं घृते चरुम्' इति सप्तमीश्रुतिरुपपद्यते । आचार्येणापि दर्शितोयं न्यायः मैत्राबार्हस्पत्यायां शतकृष्णलायां च 'पवित्रवत्याज्ये कर्णानावपति' इति, 'तानि पवित्रवत्याज्ये आवपति' इति च ॥

२६. क.—स्रुवेण प्रणीताभ्य आदाय अन्या वा यजुषोत्पूयाभिमन्त्र्य 'समाप' इति चरुस्थाल्यामानीय लौकिकमुदकं चरुपाकपर्याप्तमानीय तत्रोदकवत्यां चरुस्थाल्यां चर्वनेकत्वे विभागं कृत्वा 'घर्मोसि' इति तण्डुलानावपति । 'जनयत्यै त्वा' इति न संयवनं, [1]पिष्टार्थत्वात् । न प्रथनं, नापि श्लक्ष्णीकरणं, [2]पुरोडाशार्थत्वात् । नोल्मुकैः प्रतितपनं, नाभिज्वलनं, न सहाङ्गारभस्माध्यूहनम्, चरोरन्तर्गतोष्मणा पाकात् पाकार्थत्वाच्चैतेषाम् । 'अविदहन्तः' इति मीमांसकाः कुर्वन्ति । तस्याप्यर्थकृत्यस्याभावात् न । स ह्यभिवासनार्थः प्रैषः 'तामभिवासयन् वाचं विसृजते' इत्यध्वर्योरेक[3]कर्तृत्वात् । नापि लेपनिनयनं, तण्डुलानां लेपाभावात् । नाङ्गारापोहनम् । सूर्यज्योतिरित्यभिमन्त्रणमस्ति । यथादेवतमभिघारणम् ॥

ह.—अनूहोधिश्रयणमन्त्रस्य, हविरभिधानात् ॥

[1]ख—अपि. [2]ख—अपु. [3]ख—रेव.

२७. क.—स्थाल्यामनुद्धृत्य स्थाल्या सह चरुमुद्वास्य आसादयति । चरोर[पि]पृथुत्वात्[1] 'आर्द्रः प्रथस्नुः' इत्यविकृतो मन्त्रः ॥

ह.—सहैव स्थाल्या आसादयेदित्यर्थः । अयं चार्थो न्यायप्राप्त एवोपदिश्यते । कथम्? अधिश्रितस्य हविषो यः पूर्वभागः स एवावदानकाले पूर्वार्ध इत्यभिधीयते । यदि चरुरुद्ध्रियेत पूर्वार्धविपर्यासस्स्यादित्यनुद्धृत्येत्युक्तम् । अधिश्रयणादि च पूर्वार्धदेशलक्षणं मन्यमान आचार्योऽभिहितवान् 'अपर्यावर्तयन्पुरोडाशमुद्वास्य' इति । अतश्च धाना अपि सकपाला उद्वास्या इति सिद्धम् । प्रथनं श्लक्ष्णीकरणं उल्मुकैस्तपनं तण्डुलेष्वङ्गाराध्यूहनं अङ्गाराधिवर्तनं च चरुस्थाल्यामर्थलोपान्नक्रियन्ते, दृष्टसंस्कारत्वात् । 'अविदहन्तश्श्रपयत' इति च क्रियते, आग्नीध्रप्रैषार्थत्वात् । उद्वासनमन्त्रश्चनोह्यते, पच्यमानस्य चरोः पृथुता जायते इति । विहितस्य प्रथनस्याभावात् 'आर्द्रो भुवनस्य' इत्यूहमन्ये वर्णयन्ति ॥

२८. क.—दर्शपूर्णमासयोस्सामिधेन्यः अग्निसमिन्धनार्था ऋचः 'त्रिः प्रथमामन्वाह । त्रिरुत्तमाम्' इत्यभ्यस्ताभ्यां प्रथमोत्तमाभ्यां सह पञ्चदश । बहुयाजिनोपि पञ्चदश विकल्पेन लभ्यन्ते ॥

ह.—समिन्धनार्था ऋचस्सामिधेन्यस्ताः पञ्चदश दर्शपूर्णमासयोर्भवन्ति । अनारभ्य शाखान्तरे सामिधेनीनां

[1] ख—रपृथक्त्वात्.

साप्तदश्यमाम्नातम् । दर्शपूर्णमासप्रकरणे पाञ्चदश्यवचनं बहुयाजिनामपि पाञ्चदश्यप्राप्त्यर्थमेव ॥

२९. क.—यासां विकृतीनां इष्टीनां पशुबन्धानां च 'सप्तदश सामिधेनीरन्वाह' इति पुनस्सप्तदश सामिधेन्यो विधीयन्ते तत्र सप्तदश, अन्यत्र पञ्चदशैव ॥

ह.—इदानीं प्रकृतौ प्रतिषिद्धस्य साप्तदश्यस्यावकाशोऽभिधीयते—यास्विष्टिषु पशुबन्धेषु वा साप्तदश्यं श्रूयते तास्वेव भवति नेतरास्वित्यर्थः; कासुचिद्विकृतिषु पुनश्श्रवणस्य तास्वेवोपसंहारार्थत्वात्, प्रकरणाम्नातस्यापूर्वसम्बन्धार्थत्वेनानारभ्याम्नातस्य द्वारविनियोगार्थत्वेन च व्यापारभेदसम्भवात् ॥

३०. क.—'आथर्वणा वै काम्यास्ता उपांशु कर्तव्याः' इति या विकृतय उपांशु क्रियन्ते, तत्र यावत्प्रधानं प्रधानदेवतावाचकं पदमुपांशु प्रयोक्तव्यम्, याज्यानुवाक्ये च ॥

ह.—यदिदं श्रूयते 'उपांशु काम्या इष्टयः क्रियन्ते' इति, तत्र काम्यास्विष्टिषु यावत्प्रधानं तावदेवोपांशु भवति । नाङ्गेषूपांशुत्वमित्यर्थः । इदं च प्रधानोपांशुत्वं न्यायसिद्धमेवोपदिश्यते । विकृतौ प्रधानस्य प्रत्यक्षोपदिष्टत्वात्, अङ्गानां चानुमानिकत्वात् प्राकृतविध्यन्तातिदेशेनैव वैकृतविधेर्निराकाङ्क्षत्वात् वैकृतोपदेशापर्यवसानेनैवाकाङ्क्षायाः कल्प्यत्वात् प्रधानसम्बन्धमात्रेणैव वैकृतोपदेशस्य कृतार्थत्वा-

द्विकृतावुपदिश्यमानमुपदिष्टेनैव प्रधानेन प्रथमतरं सम्बध्यत इति न्यायप्राप्तोयमुपदेशः । अतश्च काम्यग्रहणं विकृतीनामुपलक्षणार्थम् । उपांशुग्रहणं च विकृत्युपदिष्टधर्माणामित्यवधार्यते । अत एव 'उपांशु दीक्षणीयायाम्' इति, 'उच्चैरग्नीषोमीये' इति, 'ततस्तूष्णीमग्निहोत्रं जुहोति' इति, 'सप्त ते अग्ने समिधस्सप्त जिह्वाः इत्यग्निहोत्रं जुहोति' इत्येवमादीनामपि यावत्प्रधानमेव सम्बन्धो भवति । उपांशुत्वस्य शब्दधर्मत्वात्प्रधानसन्निकर्षाच्च देवतापदमेवोपांशु प्रयुज्यते यस्मिन् प्रधानदेवताशब्दो मन्त्रगतः पठ्यते । यत्र द्रव्यशब्द एव पठ्यते न देवताशब्दस्तत्र तस्मिन्नेवोपांशुत्वं भवति, यथा 'घृतस्य यज' इति । अग्नीषोमीये तु क्रौञ्चमि[1]वोच्चैस्त्वं 'उच्चैरग्नीषोमीये' इति विधीयते, 'तस्मादुपवसथे यावत्या वा वाचा कामयेत तावत्यानुब्रूयात्' इति बह्वृचश्रुतेः । ततः क्रौञ्चमि[1]वोच्चैस्त्वं वैकृतप्रधानार्थमुपदिश्यते । आश्रुतादीनां तु प्रधानस्यापि प्रकृतितः प्राप्तो मध्यमस्वरः । ततोग्नीषोमीयवपायागेषु स्वरभेदादग्नीषोमाभ्यां मध्यमस्वरं[2] नैयायिका मन्यन्ते ।

३१. क.—येषां प्रधानानां श्रुत्याद्यवगतशेषत्वैः पदार्थैः कल्पित उपकारः कथमंशपूरकः ताः प्रकृतयः । ततश्च विकृतयः कथमंशपूरकमुपकारं गृह्णीयुः । विकृत्यपेक्षं हि प्रकृतित्वम् । येषां चाविहितेतिकर्तव्यतानामन्यत्र

[1] घ—क्रौञ्चरूपमे.

[2] घ—तत्राग्नीषोमीये वपायामङ्गेषु च स्वभेदः अग्नीषोमीयायामध्यवसाय प्रयोगं.

विहितेनोपकारेण कथमंशः पूर्यते ता विकृतयः। विकृतिष्वपि यासां स्वप्रकरणसमाम्नानावगतशेषत्वैः पदार्थैः कल्पितोपकारेण सहातिदेशप्राप्तप्राकृतोपकारस्य साकाङ्क्षत्वं कल्पयित्वैकत्वमापद्य तेनैवोपकारेण कथमंशःपूर्यते ता विकृतयोप्यात्मीयसदृशचोदनाविहितकर्मभ्यस्तमात्मीयमुपकारं प्रयच्छन्ति। अन्यापेक्षया ताः प्रकृतयः। एवं च काश्चित्प्रकृतय एव अग्निहोत्रदर्शपूर्णमासज्योतिष्टोमाः। काश्चिद्विकृतयः प्रकृतयश्च, यथा वैश्वदेवाग्नीषोमीयपशुप्रथमनिकाय्यद्वादशाहादयः। काश्चिद्विकृतय एव, यथा कुण्डपायिनामयनेऽग्निहोत्रसौर्यवायव्यपशूद्भित्पौण्डरीकादयः। तत्रानुक्रमिष्यन्ते—'दर्शपूर्णमासाविष्टीनां प्रकृतिः'। दर्शपूर्णमासाविष्टीनां स्वेतिकर्तव्यतां प्रयच्छन्तावुपकुरुतः॥

ह.—अनाम्नानेतिकर्तव्यताके प्रधाने अन्यतो धर्मातिदेश इत्युक्तं 'सहाङ्गं प्रधानं' इत्यत्र। कस्या विकृतेः का प्रकृतिः? इति विशेषोपदेशार्थमुपरितनसूत्रारम्भः। श्रुतद्रव्यदेवताका अप्राणिद्रव्यकाः क्रिया इष्टय इत्यभिधीयन्ते॥

३२. क.—अग्नीषोमीयस्यापि पशोस्तावेव धर्मान् प्रयच्छतः। अतस्तौ तस्य प्रकृतिः॥

ह.—दर्शपूर्णमासौ प्रकृतिरिति शेषः। अग्नीषोमीयो निरूढस्य। निरूढोन्येषां पशूनां वायव्यादीनाम्। इदमर्थमेव श्रुतावग्नीषोमीये विहितानां धर्माणां निरूढे सूत्रकारेण निबन्धनम्। अनूबन्ध्याया निरूढवद्वचनं 'तिस्रो-

नूबन्ध्या' इत्यस्मिन्पक्षे निरूढ एव प्रकृतिः नैकादशिनधर्मा इति ख्यापनार्थम् ॥

३३. क.—सोग्नीषोमीयः दार्शपूर्णमासिकान् धर्मानात्मसात्कृत्वा, तैस्सहात्मीयान् सवनीयाय प्रयच्छति । अतस्तस्य प्रकृतिः ॥

ह.—सोग्नीषोमीयस्सवनीयस्य प्रकृतिः । सवनीयस्य पशुपुरोडाशस्य ऐन्द्राग्नपशुपुरोडाशस्य च वार्त्रघ्नहुतानुमन्त्रणं केचिन्मन्यन्ते । उभयोरग्नीषोमीयपशुपुरोडाशप्रकृतिकत्वं मन्यमाना औपदेशिकाः पुनस्तदनुपपन्नमिति मन्यन्ते । य एव प्रत्यक्षविहिता अग्नीषोमीयधर्मास्त एवाग्नीषोमीयात्सवनीयविधिनाऽतिदिश्यन्ते । ये तु दार्शपूर्णमासिकास्ते दर्शपूर्णमासाभ्यामेव सवनीयादिषु प्रवर्तन्ते नाग्नीषोमीयात्, न हि भिक्षुको भिक्षुकान्याचितुमर्हतीति न्यायात् । अग्नीषोमीयस्य पशुपुरोडाशस्य वार्त्रघ्नहुतानुमन्त्रणं दार्शपूर्णमासिकम्, तयोरपि हुतानुमन्त्रणस्य दार्शपूर्णमासिकत्वमेव न्याय्यम् । इदमर्थमेवाग्नीषोमीयस्य च पशोरित्यत्र चशब्दग्रहणम् । तस्मादाग्नेयस्य पशुपुरोडाशस्य आग्नेयवद्धुतानुमन्त्रणम् । ऐन्द्राग्नस्यैन्द्राग्नवत् ॥

३४-३५. क.—एवमग्नीषोमीयलब्धैस्सहात्मीयान् धर्मान् 'आग्नेयः कृष्णग्रीवः' इत्यादिविहितानामैकादशिनानां प्रयच्छन् तेषां सवनीयः प्रकृतिः । तथा ऐकादशिनाः पशुगणानां 'आदित्यां मल्हाम्' 'आश्विनं धूम्रललामं' इत्यादिविहितानां प्रयच्छन्तस्तेषां प्रकृतिः ॥

३४. ह.—एकादशिनीति यागसंज्ञा, यस्यामेकादश यूपाः पशवो वा स्युः। एकादशिन्यां भवा ऐकादशिनाः। प्रयोजनं 'मध्येग्नेराज्याहुतीः' इत्येवमादीनां प्रयोगः॥

३५. ह.—समानतन्त्राणामैकादशिनधर्मा भवेयुः। द्वयोरपि समूहो गण एव, यथा 'मैत्रँ श्वेतमा लभेत वारुणं कृष्णम्' इति। ये पुनस्सोमान्तःपातिनः पशुधर्मा ग्रहावकाशशृतंकारादयस्ते पशुगणेषु न भवन्ति। गार्भिणीनां[1] कालभेदेन भिन्नत्वान्नैकादशिनधर्माः॥

३६. क.—वैश्वदेवं 'आग्नेयमष्टाकपालम्' इत्यादिविहितम् दर्शपूर्णमासलब्धैस्सहात्मीयान्नवप्रयाजादिधर्मान् वरुणप्रघासादीनां प्रयच्छत्तेषां प्रकृतिः॥

ह.—विश्वेदेवा देवतात्वेन यस्मिन् यागगणेन्तर्भूतास्तस्य वैश्वदेवमिति नामधेयम्। तच्च चातुर्मास्यानामाद्यं पर्व। वरुणप्रघासो द्वितीयं पर्व। साकमेध इति महाहवि[2]र्गृह्यते, पञ्चसञ्चराणां तत्र विधानात्, तन्निमित्तत्वाद्वैश्वदेवातिदेशस्य। इन्द्रश्शुनासीरो यस्मिन्यागगणे देवतात्वेनान्तर्भूतस्तस्य शुनासीरीयमिति संज्ञा। तच्चातुर्मास्यानां चतुर्थं पर्व। वरुणप्रघासादीनां पर्वणां वैश्वदेवं प्रकृतिः। वरुणप्रघासेषु वैश्वदेववत्करूपवचनं दक्षिणविहारार्थम्॥

३७. क.—वैश्वदेवे भवो वैश्वदेविकः। एकस्मिन्कपाले संस्कृतः परोडाश एककपालः। वैश्वदेविक एककपालः पुरोडाशः

---

[1] घ.—गर्भिणीनां.  [2] घ—साकमेधइति तृतीयं पर्व अत्रपञ्चमहावि.

आत्मीयान्विशेषधर्मानाज्याभिपूरणसर्वहुतत्वादीनितरेषां एकक-पालानां प्रयच्छंस्तेषांप्रकृतिः । स्वधर्मप्रदातृत्वेन वैश्वदेवि-कस्यैककपालस्य निर्देशादिहैककपालसाध्ययागधर्मा नवप्र-याजादयोऽन्येषामेककपालसाध्यानां यागानां नातिदिश्यन्ते । तेषामेव मासनामभिर्होमो नैककपालधर्मः । आघारसम्भे-दवदग्नेस्स्थानविशेषोपलक्षण एककपालः ॥

ह.—एकस्मिन्कपाले संस्कृतः पुरोडाश एककपालः । तस्यै-ककपालस्य वैश्वदेविको द्यावापृथिव्य एककपालः प्रकृतिः । अनेनाभिपूरणादयो वैशेषिका धर्मा एवातिदिश्यन्ते न पुन-स्साधारणाः प्रसूमयनवप्रयाजादयो वैकृतेष्वेककपालेषु । अत एवाचार्येण वैशेषिकधर्मा आग्रयणे निबद्धाः । मासनाम-भिरभिहोमोपि साधारण[1] इत्यवगम्यते । अनु[2]क्रमणादाग्रयणे । एक[3]कपालायां कपालनाशेष्टयां न क्रियते ॥

३८. क.—वैश्वदेवे यागगणे भवा वैश्वदेवी । न देवता, तद्धितेन वैश्वदेविक्या एककपालेन सह निर्देशात् । वैश्व-देव्यामिक्षा एककपालवदात्मीयान् 'द्वयोः पात्रयोरुद्धृत्य' इत्येवमादीनन्यासामामिक्षाणां प्रयच्छति । सा तासां प्रकृतिः ॥

ह.—तप्तं पयो दधिसंयोगेन घनीभूतमामिक्षेत्युच्यते । सा वैश्वदेविका इतरासामामिक्षाणां प्रकृतिः । अयमपि वै-शेषिकाणामेवातिदेशः । वैश्वदेव्या यद्भुतानुमन्त्रणं 'प्राणैस्सा-

[1] घ.—न साधारण. [2] घ.—अननु. [3] घ.—अतएक.

युज्यं गमेयम्' इति । तच्च द्यावापृथिव्यैककपालस्य च ['उभयोर्लोकयोः' इति] तच्च मैत्रावरुण्यादीनामामिक्षाणां कायादीनामेककपालानां च मन्यन्ते, वैशेषिकधर्मत्वाद्देवताधर्मत्वाच्च । न चैतद्वैश्वदेव्यामतिदेशप्राप्तं, वैकृतानां हुतानुमन्त्रणानां विकृत्यर्थत्वात् । न चायं देवताधर्मः कर्मप्रयुक्तत्वाद्धर्माणाम् ।

अन्ये तु.—देवताश्रयत्वाद्वैश्वदेववद्धुतानुमन्त्रणम् । तथैव मैत्रावरुण्यामपीति[1] स्थितम् ॥

३९. क.—दर्शपूर्णमासाविष्टीनां प्रकृतिरिति बह्वीषु प्रकृतिषु का कस्याः प्रकृतिरित्येतद्विवेकायाह 'तत्र सामान्याद्विकारः' इति । तत्र प्रकृतिविकृतिभावे सामान्यात्सादृश्याद्विकारः विकृतिर्गम्यते । तत्र प्रकृतिषु हवींषि औषधमाज्यं दधि पयश्च । देवताश्चाग्निरग्नीषोमाविन्द्र इन्द्राग्नी च । तत्र हविस्सामान्याद्देवतासामान्याच्च विकारो गम्यते । तत्र द्रव्यसादृश्यात्पुरोडाशविकाराश्चरुहिरण्यसुरादयः । आज्यविकारा मधूदकादयः । सान्नाय्यविकारा आमिक्षावाजिनादयः । पशोः पयोविकारत्वे[2] कुम्भ्यादिदर्शनं हेतुः पशावेवोक्तः । देवतासादृश्याद्विकारभावो वक्ष्यते ॥

ह.—तत्र दर्शपूर्णमासाविष्टीनां प्रकृतिः इत्युक्तम् । द-

---

[1]घ—कर्मप्रयुक्तत्वाद्धर्माणां देवताश्रयित्वाद्वैकृतानां प्रकृतिवदूहार्थं यद्धुतानुमन्त्रणं तदेव मैत्रावरुण्यादीनामिति.

[2]ख—पुरोडाशविकाराश्चरुप्रभृतयः । सुरादय आज्यविकाराः । मध्वादयस्सान्नाय्यविकाराः । आमिक्षावाजिनादयः पशोर्विकाराः । पशुविकारत्वे.

र्शपूर्णमासयोश्च यान्याग्नेयादीनि पयोन्तानि षट्प्रधानानि तेषामेकैकं प्रधानं वैकृतस्य प्रधानस्य प्रकृतिः । तेन शाब्दगतमर्थगतमपि सादृश्यमुपदिश्यते । तेन[1] सर्वाणि समप्रधानानीत्यनेन प्रतिपाद्यते । समानस्य भावस्सामान्यं सादृश्यमित्यर्थः । यद्वा—विशेषातिदेशकारणानामक्षरसामान्यादीनामुपसङ्ग्रहणार्थमपि[2] ॥

४०. क.—एका देवता यासां विकृतीनां औषधद्रव्याणां ता आग्नेयधर्मानभिघारणादीन् गृह्णीयुः, यथा ‘आदित्यं चरुम्’ ‘सावित्रं द्वादशकपालम्’ इत्यादि ॥

ह.—एका देवता येषां चरुपुरोडाशादीनां त एकदेवताः । सावित्रः पुरोडाशः सौम्यश्चरुरित्युदाहरणम् ॥

४१. क.—द्वे देवते यासां विकृतीनामौषधद्रव्याणां ता द्विदेवताः । तासां द्विदेवत्वसामान्यादग्नीषोमीयविकारत्वम् । यथा ‘आग्नावैष्णवमेकादशकपालम्’ इत्येवमादयः ॥

ह.—द्वे देवते येषां ते द्विदेवताः । आग्नावैष्णवमुदाहरणम् ॥

४२. क.—अग्नीषोमीयविकार इति चशब्देनानुकृष्यते । बह्व्यो देवता यासां विकृतीनां ता बहुदेवताः ता अनेकदेवतासामान्यादग्नीषोमीयविकाराः । यथा—‘वैश्वदेवश्चरुः’ इत्येवमादयः ॥

---

[1] ग—मुद्दिश्य तेन.

[2] घ—यद्वाऽनुक्रान्तानां विशेषातिदेशकतयामिक्षासामान्यादीनामुपसङ्ग्रहार्थमिदमारब्धम्.

ह.—बहवो देवता येषान्त इमे बहुदेवताः । वैश्वदेवश्च-रुरुदाहरणम् ॥

४३. क.—द्विदेवता बहुदेवताश्च द्विदेवतात्वानेकदेवतात्व-सामान्यादैन्द्राग्नविकारा वा । यथा—‘आश्विनं द्विकपालं’ ‘मारुतं सप्तकपालं’ इत्येवमादयः । न तु[1] समविकल्पः । चत्वार्यक्षराण्यग्नीषोमौ । त्रीणीन्द्राग्नी । तत्र यासां वि-कृतीनां द्विबहुदेवतापदेषु चत्वार्यक्षराण्यधिकानि वा ता अ-ग्नीषोमीयविकाराः । यासां त्रीण्यूनानि वा ता ऐन्द्राग्न-विकाराः । तथा चोदाहृतं अन्यतन्त्रप्रकृति वा[2] ॥

ह.—ऐन्द्राग्नविकारा वा द्विदेवता बहुदेवताश्च भवेयुः; न चायं तुल्यविकल्पः । व्यवस्थितविभाषा ह्येषा । च-तुरक्षरप्रभृतयोऽग्नीषोमीयविकाराः यथा—‘वैश्वदेवश्चरुः’ आ-ग्नावैष्णवो द्वादशकपालः’ इति । ततोर्वाक् त्र्यक्षरप्रभृतय ऐन्द्राग्नविकाराः ‘यथा मारुतस्सप्तकपालः’ इति । प्रा-तर्दोहविकाराः पशवः, पशुप्रभवत्वसामान्यात् ‘आज्येन पशुं’ ‘यस्त आत्मा पशुषु प्रविष्टः’ इति मन्त्रलि-ङ्गाच्च । यत्र सगुणा देवतास्तत्र गुणाक्षरैस्सह देवताक्षरा-णि गण्यन्ते, गुणानामप्युद्देश्यत्वेनान्वयात् । अतो मरु-तस्सान्तपना अग्नीषोमीयविकाराः । अत एव ‘वेदं कृ-त्वाग्निं परिस्तीर्य’ इत्युक्तम् । इतरथा ऐन्द्राग्नविकारत्वे वे-दानन्तरं वेदिस्स्यात् ॥

---

[1] ख—नचायं.

[2] ख—...विकारा इति व्यवस्था । यथोदाहृतं सूत्रकृता ‘अन्यत्र प्रकृतिदे...... सौम्यश्चरुरिति’ ।

४४. क.—प्रकृतावग्नीषोमीये सोमश्च देवता । ऐन्द्राग्ने इन्द्रश्च । ते प्रकृतिदेवते विकृतिष्वैन्द्रपुरोडाशे सौम्ये चरौ दृश्येते । ताभ्यामन्यत्रैकदैवतात्वेन विकारभावः । तयोस्सौम्योग्नीषोमीयविकारः, देवतैक्यात् । तथैन्द्रश्चैन्द्राग्नविकारः । सौमैन्द्रश्चरुस्सोममुख्यत्वादग्नीषोमीयविकारः । इन्द्रासोमीय इन्द्रमुख्यत्वादैन्द्राग्नविकारः ॥

ह.—प्रकृतौ देवताः प्रकृतिदेवताः । ता वर्जयित्वा एकदेवतानामाग्नेयविकारत्वमित्यर्थः । यथेत्युदाहरणनिर्देशः ॥

४५. क.—इह बलीयश्शब्दश्रवणादनुक्तोपि विरुद्धो विकारः विकारविरोध आश्रीयते । सामान्यशब्दो हविषापि सम्बध्यते । यत्र प्राजापत्यचर्वादौ प्रजापतिदेवताकत्वादुपांशुयाजधर्मप्राप्तिः औषधद्रव्यकत्वादाग्नेयधर्मप्राप्तिः । अतः प्राजापत्ये हविर्देवतासामान्ये विरुद्ध्येते । तत्र विरोधे सति हविस्सामान्यादाग्नेयधर्मप्राप्तिर्बलीयसी । प्रकृतिविकारभाव आसामप्यस्त्येव ॥

ह.—हविश्च देवता च हविर्देवते । तयोस्सामान्यं हविर्देवतासामान्यम् । हविस्सामान्ये देवतासामान्ये च यदा प्रकृतिनियमं प्रति विरुध्यमाने हविस्सामान्येन प्राकृतविध्यन्तनियम इत्यर्थः । प्राजापत्यः पुरोडाश उदाहरणम् । तत्र हविस्सामान्येन पुरोडाशधर्मा भवेयुः । देवतासामान्येनोपांशुयागधर्माः । तथा सौम्यचरावाज्यभागयोः हविस्सामान्येनोपांशुयागविकारत्वम् । नाग्नीषोमीयविकारधर्माः । ‘अथैकेषां सोमाय पितृमत आज्यं’ इत्यत्राप्युपांशुयाजधर्मत्वम् ॥

४६. क.—बलाबलप्रसङ्गादिदमाह—यत्रैतदापतति अवहननादिद्रव्यसंस्कारायोग्या व्रीहिमयास्तण्डुला विद्यन्ते सर्वसंस्कारयोग्या व्रीहिसदृशा नीवारा विद्यन्ते, तत्र यदि व्रीहिमयः पुरोडाशः अवहननादिसंस्कारहानिः, अथ तत्संस्कारादन्यः व्रीहिमयत्वहानिः। एवं द्रव्यसंस्कारविरोधः। तस्मिन्विरोधे द्रव्यं बलीयः। द्रव्यं ग्राह्यं संस्कारहीनमपि॥

ह.—द्रव्यं च संस्कारश्च द्रव्यसंस्कारौ। तयोर्विरोधो द्रव्यसंस्कारविरोधः। तत्र द्रव्यं बलीयः। यथा गवामभावे गोपयस उपलब्धिः अजाश्च पयस्विन्यस्सम्भवन्ति। तत्र संस्कारत्यागेन गोपय एव गृह्यते न पुनस्संस्कारार्थमजापयो गृह्यते। परे तु—संस्कारान्पयसि कुर्वन्ति। 'संस्काराः पयसि क्रियन्ते। गव्ये पयसि क्रियन्ते पूर्वे च मन्त्रा जप्याः' इति बोधायनश्च॥

४७. क.—अर्थशब्दः प्रयोजनवाची। द्रव्यप्रयोजनयोर्यत्र विरोधः तत्र प्रयोजनं बलीयः बलवत्। तथा हि खादिरो यूपद्रव्यत्वेन विहितः 'खादिरो यूपः' इति। तस्य च प्रयोजनमात्मनिबद्धस्य पशोर्निवारणम्। स चाणुर्विद्यते तन्निवारणासमर्थः। तत्समर्थश्च कदरो विद्यते। यदि द्रव्यजिघृक्षा पशुवारणप्रयोजनानवाप्तिः। यदि तज्जिघृक्षा द्रव्यानवाप्तिः। अतोऽर्थद्रव्ययोर्विरोधः। तत्रार्थो बलीयान्, प्रयोजनं बलवत्तरम्॥

ह.—अर्थः प्रयोजनम्। यथा पशुनियोजनार्थं समर्थः

खादिरो न लभ्यते समर्थाः कदरादय एवोपादीयेरन् । नत्वन्याश्रयापेक्षाः खदिराः ॥

४८. क.—अध्ययनविध्यधीतानां मन्त्रवाक्यानां स्वाध्यायपाठावधृतस्वरूपाणामर्थवशाद्रूपान्तरकरणमूहः । स प्रकृतौ न विद्यते न क्रियते । प्रकृतौ मन्त्रा यत्राभिधातुं समर्थाः तत्र न । यथा 'अग्नये जुष्टमभिघारयामि' इत्याग्नेयपुरोडाशाभिघारणे, नाग्नीषोमीये । तत्रामन्त्रकः प्रयोगः, नाग्नीषोमाभ्यामित्यूहः ॥

ह.—प्रकृतौ लिङ्गसङ्ख्याविरोधेऽपि नोह्यते । प्रकृतिग्रहणं चात्रोपदेशोपलक्षणार्थम् । उपदिष्टा मन्त्रानोह्यन्ते, अतिदिष्टा एवोह्यन्ते इत्यर्थः । 'चितस्स्थ' इत्युदाहरणम् । तत्र बहुवचनान्तेन मन्त्रेणैकं कपालमुपधीयते । 'उखे उपदधाम्यहम्' इत्येका उखा उपधीयते । 'अवदानानि ते प्रत्यवदास्यामि' इति द्वयोरप्यवदानयोर्नोह्यते । विकृतावप्येषामनूह एव, जात्यभिधानात् । उक्तं चाश्वलायनेन 'सर्वेषु यजुर्निगदेषु । प्रकृतौ समर्थनिगमेषु' इति । अवदानानीति कस्माज्जमदग्न्यर्थो न भवति । सन्निहितानि[1] त्रीण्यवदानानीति । अवदानशब्दः द्वयोरप्यवदानयोस्तावदविरुद्धः । केवलं सङ्ख्यागुणो विरुद्धयते । न हि गुणानुरोधेन प्रधानशब्दस्य निवृत्तिरुपपद्यते । यत्र तु प्रधानशब्द एव विरुद्धयते तत्र निवर्तते मन्त्रः, यथा 'इमौ पर्णं च दर्भं च'

[1] घ—सन्निहितस्य.

इति शमीशाखायाम् । 'व्रीहीणां मेध सुमनस्यमानः' इति यवमये । यत्र द्वयोस्समवेतयोरेवैकवचनं तत्रासौ मन्त्रः प्रतिहविरावर्तते, यथा 'यज्ञोसि सर्वतः श्रितः' इति, यथा 'इषे त्वेति बर्हिषी आदत्ते' इति । प्रकृतिग्रहणस्योपलक्षणत्वात् 'उदुस्र तिष्ठ' इन्येवमादीनां स्त्रीपशौ द्विप्रभृतिषु चानूहेनैव प्रवृत्तिस्सिद्धा । सारस्वते तु द्वादशकपाले सरस्वतो हुतामिति[1] न प्रवर्तते लिङ्गविशिष्टस्यैवोपदिष्टत्वात् । यत्र तु प्रकृतावलिङ्गसलिङ्गौ, यथा तैत्तिरीयाणामेकस्मिन्नुपरवे 'वैष्णवान् खनामि' इति बहुवचनान्तो मन्त्रः, मैत्रावरु[य]णीयानां 'एकवदुपरवमन्त्रान्' इत्येकवचनान्तो मन्त्रः, तत्र एकवचनान्त एव विकृतावतिदिश्यते । समर्थवचने सम्भवत्यसमर्थस्यानातिदेशादित्यौपदेशिकाः ॥

४९. क.—यदीया धर्माः कार्यमुखेन यस्मिन्नतिदिश्यन्ते सा तस्य विकृतिः । प्रकृतौ मन्त्रा यंयमर्थं प्रकाश्य प्रधानमुपकृतवन्तः यदि विकृतावपि तंतमेव प्रकाश्योपकुर्युः न तत्र तेषामूहः । यत्र तु प्राकृतप्रकाश्याभावः तत्स्थाने च वैकृतं प्रकाश्यान्तरमुपदिश्यते अन्यत् प्राकृताधिकं वोपदिश्यते तद्विकृतौ यथार्थं यथा यथार्थवन्तो मन्त्रास्तथा तथा ऊहः मन्त्रसन्नामः कर्तव्यः । यत्राम्नातप्रत्ययार्थस्थाने प्रत्ययार्थान्तरमुपदिश्यते तत्र प्रत्ययार्थस्योहः, यथा 'येन येनादधाति' । क्वचित्प्रकृत्यर्थस्थाने प्रकृत्यर्थान्तरोपदेशः, यथा 'उस्रस्य हविषः' इति । क्वचिद्व-

[1] ग—सरस्वतोहमिति.

योस्स्थानेऽन्यद्द्वयमुपदिश्यते, यथा 'विश्वेभ्यो देवेभ्यो जुष्टम्' इति। क्वचिदत्यधिकोपदेशः, यथा 'स्रुवं च स्रुचश्च' इति। क्वचित्प्राकृतार्थाभावः, तत्स्थाने कस्य चिदुपदेशो, यथा 'प्रोक्षणीरासादय। स्रुवं च स्रुचश्च' इति। यथा सौर्यचरौ पिष्टमन्त्रा एव लुप्यन्ते। अर्थवादवर्जम्—अर्थवादान् व्याख्यास्यति॥

ह.—यथा यथा अर्थः यथार्थम्। यथा अन्वारम्भणीयादक्षिणायां 'ब्रह्माणौ ब्रह्माणौ स्थो ब्रह्मणे वां मा मा हिꣳसिष्टमहुतौ मह्यं शिवौ भवतम्' इति। ब्रध्नमन्त्रस्तु नोह्यते, द्रव्यस्यानेकत्वेपि विभागस्यैकत्वात्। 'इयं स्थाली' इति तु लुप्यते, स्थाल्यभावात्। 'सहस्रधाराबुत्सावक्षीयमाणौ तौ दध्रतुः पृथिवीमन्तरिक्षं दिवं च. ताभ्यां मिथुनाभ्यामतितराणि मृत्युम्' इति। 'ब्राह्मणा इमौ गावौ' इति। 'रुद्राय गाम्' इत्यनूहेन मन्त्रप्रतिग्रहः, प्रकृत्यर्थत्वान्मन्त्रस्य। पत्नीपदस्य जात्यभिधानादनूहः। द्विपशुप्रयोगे 'पशू हव्यं' इत्यूह्यते। 'आज्यं दधि स्थ' इत्यूह्यते, न पुनः 'आज्यदधिनी स्थ' इति। 'आज्येन दध्नो देहि' इति सम्प्रैषः, दधिसंस्कारार्थत्वात्। असंस्कारपक्षे प्रकृतिवत्। तथा 'अदिती स्थोच्छिद्रपते' इति संस्कारपक्षे। 'तेजसी स्थस्तेजोनु प्रेतं' 'अग्नेर्जिह्वे स्थस्सुभुवौ देवानां धाम्नेधाम्ने देवेभ्यो यजुषे यजुषे भवतम्'। 'आज्यं दधि स्थः सत्यायुषी स्थः सत्येन वामभिघारयामि' 'तयोर्वां भक्षीय' इत्यादि। 'अद्भिराज्यं दध्याज्येन दध्नापः……संविदा-

नः' । 'इमे स्थाल्यौ घृतस्य दध्नः पूर्णे' । 'इयं स्थाली दध्नः पूर्णा' इति वा । 'इमौ स्रुवस्वधिती अभिजीह्रतः'[1] । 'दिवं च तेनानडुहानितराणि यूत्सुमिति'। 'ब्राह्मणा अयं वोनड्वान्' । 'अग्नेर्वोपन्नगृहस्य' । सोमेष्टिषु आगुराशीस्थाने 'एयमगन्नाशीर्दोहकामा' इत्यूहः । अस्य यज्ञस्यागुरः आगूःकरणस्य उद्वृचं समाप्तिं अशीयेत्याशिषामागुरः । अत एव 'सा मे सत्याशीः' इत्येतन्निवर्तते । सोमे अग्नीषोमीये 'निस्रम्ससमिधो यज्ञायुरनुसञ्चरान्' इत्यूहः । 'शतं ते राजन्' इति याजमानं प्रत्यगाशिष्ट्वात् । 'भुवनमसि विप्रथस्वापो यष्टय इदं नमः' । 'युनज्मि वो ब्रह्मणा दैव्येन' । इन्धानास्त्वेति पदद्वयस्य लोपः, अपामिन्धनाभावात् । 'अद्भयः स्थ मानुषा इदं शमिद्वम्' । 'तृप्तयः स्थ गायत्रं छन्दः' । 'पयस्या मां धिनोतु' इति पयस्यायां, 'मित्रावरुणाभ्यां पयस्याम्' इत्युत्पत्तौ श्रवणात् । 'शतमिन्द्राय शरदः' इति महेन्द्रयाजिनोप्यविकृतः । 'समापो अद्भिरग्मत' इति पयसि निवृत्तः । 'इडास्माननुवस्तां घृतेन' इत्यत्र मांसस्य विकारो नेष्यते, 'सा यत्र यत्र न्यक्रामत्तद्घृतमपीड्यन' इति देवताख्यापनपरत्वात् । 'घृतेन यस्याः पदे पुनते देवयन्तः' इत्यर्थवादत्वात् । तथा 'इदमिन्द्रियम्' इत्यर्थवादत्वाद्रूपायां नोह्यते । 'अन्वेनं माता मन्यतां' इत्यर्थवादत्वान्नोह्यते । एवमन्यान्यपि मन्त्रपदानि स्तुत्यर्थानि निन्दार्थानि वा । तानि वर्जयित्वा विकृतौ यथार्थमूह इत्यर्थः ॥

---

[1] क—अयं स्वधितिरभिजिहर्ति.

५०.क.—संबन्धमभिदधति पदानि वाक्यं, यथानिर्वापमन्त्रः। तत्र कानि चित्समवेतार्थानि, यथा 'अग्नये जुष्टं निर्वपामि' इति। कानि चिदसमवेतार्थाभिधायीनि, 'देवस्य त्वा सवितुः प्रसवे' इति। यानि समवेतार्थानि तानि निर्वापानुष्ठाने समवेतं विद्यमानमर्थं अभिदधति, तत्प्रकाशनार्थं वक्तव्यत्वात्। तेषामेकं वाक्यं मन्त्रात्मकम्। यानि त्वसमवेतानि निर्वापस्थाने अविद्यमानार्थानि तेषां परवाक्ये श्रूयत इति श्रवणं अतः तानि समवेतार्थवाचिपदैकवाक्यत्वेन लक्षणया लक्षितलक्षणया वा यथाकथंचिदभिहितमर्थं अभिदधतीत्यर्थवादः। एवमसमवेतार्थवाचिनामर्थवादत्वे संशयो नास्ति, यथा 'वसूनां रुद्राणामादित्यानां सदने सीद' इति प्रस्तरसादने वसुरुद्रादित्यपदानामर्थवादत्वसम्भवात्। समवेतार्थानामपि येषां परार्थमेवोच्चारणं तेषामप्यर्थवादत्वं, यथा 'अग्नेष्ट्वास्येन प्राश्नामि' इत्यग्नेरास्यविशेषणत्वेन प्राशित्रप्राशनप्रशंसा क्रियते। यस्य तु पदार्थस्य क्वचित्प्रयोगे क्वचित्समवेतत्वम् क्वचिन्न समवेतत्वम् तस्य सर्वत्रासमवेतत्वमेव, यथा 'पत्नीं सन्नह्य' इति॥

ह.—अर्थवादानामनूहे हेतुः— परवाक्यश्रवणात्— परस्य वाक्यं परवाक्यं, तच्छ्रवणात् विध्यर्थवाक्यश्रवणादित्यर्थः। तस्मात्तस्य वाक्यस्य स्वार्थे तात्पर्याभावान्नोह्यते। 'अन्वेनं माता मन्यतां' इति पश्वर्थवाक्ये श्रवणान्नोह्यते। एवमन्यान्यपि मन्त्रपदानि। 'सूर्यं ते चक्षुः' इत्येवमादयो[1]

[1]घ—...दयस्संसर्गिणो.

नोह्यन्ते, संज्ञप्तपशुवियुक्तस्य चक्षुषस्तेजसोभिधानात् । येषां शब्दानामुभयथा प्रवृत्तिः लोके दृश्यते 'शोभनमेषां चक्षुः शोभनान्येषां चक्षूंषि' इति ते संसर्गिण इत्यपरे। यत्र सगुणा देवता चोद्यते तत्र गुणशब्दोप्यूहे प्रक्षेप्तव्यः, यथा 'अग्नये शुचये' इति । सगुणद्रव्यचोदनायां तु गुणशब्दस्य प्रक्षेपो नेष्यते । ततः कृष्णग्रीवशब्दो वपासंप्रैषादिषु न प्रयुज्यते । तथा दक्षिणायां गोशब्द एव प्रयुज्यते, न मिथुनप्रथमजादिपशुशब्दाः प्रक्षेप्तव्याः ॥

५१. क—नित्ये नैमित्तिके काम्ये च प्रयोगे प्रक्रान्ते शिष्टाभावे उपदिष्टस्यालाभे सामान्यात् सादृश्यात् तत्सदृशतरं प्रतिनिधिमुपादाय स प्रयोगः परिसमापनीयः । विहितालाभे तत्सदृशस्तत्कार्यकरश्च प्रतिनिधिरुपात्तव्यः । चवैर्थेपि पयस्यलब्धे श्वैत्यान्न शङ्खोपादानमिष्यते । सुसदृशाभावे अप्रतिषिद्धमीषत्सदृशमपि प्रतिनिधातव्यम् । मौद्गे चरौ प्रक्रान्ते तदलाभे 'अयज्ञिया वै माषाः' इति प्रतिषेधान्न माषाः प्रतिनिधातव्याः ॥

ह.—शिष्टं विहितं द्रव्यं व्रीह्यादयः तेषामभावे द्रव्यान्तरं नीवारादि प्रतिनिधाय नित्यं नैमित्तिकं च कर्म प्रयोक्तव्यम् । कस्मात्? सामान्यात् । यस्माद्विहितद्रव्यस्य प्रतिनिधीयमानद्रव्यस्य च सादृश्यं शक्यते सम्पादयितुं तस्माच्छिष्टाभावे सदृशप्रतिनिध्युपादाने मुख्यद्रव्यावयवभूता एवोपात्ता भवेयुरिति प्रतिनिधिः शास्त्रार्थः । काम्यमपि कर्म प्रक्रान्तं प्रतिनिधिना समापनीयम्, प्रक्रान्तस्य कर्मणः

पूर्वाधिकारापगमेपि प्रक्रमनिमित्ताधिकारत्वेनावश्यपरिसमाप्यत्वात् । यत्र प्रतिनिध्युपादानार्थं प्रवृत्तस्य मुख्यमेव द्रव्यं लभ्यते तत्र तन्मुख्यमेवोपादेयम् । यत्र प्रतिनिधिं समादाय केषु चित्संस्कारेष्वनुष्ठितेषु मुख्यलाभः तत्र प्रतिनिधिनैव समाप्यम् । यत्र सदृशद्रव्यस्य प्रतिनिहितस्य नाशः तत्र मुख्यसदृशमेवोपादद्यात्, न प्रतिनिहितसदृशम् । सोमापचारे प्रतिनिधिष्वपि नष्टेषु सोमसम्भवे सोम एवोपादेयः, तदसम्भवे सदृश एवेति । यत्र सदृशस्य प्रतिनिहितस्य नाशस्तत्र मुख्यसद्भावे मुख्यमेवोपाददद्यात्, न प्रतिमिहितस्य सदृशम् । यत्र सदृशबुद्धिरुपजायते, तस्यैव प्रतिनिधित्वेनोपादानम् ॥

५२. क.—यदलाभे यत्स्थाने यस्सदृशतरः प्रतिनिधीयते, स तद्धर्मा स्यात् । व्रीह्यभावे नीवारः प्रतिनिधीयमानो व्रीहिधर्मा स्यात् । व्रीहिपदस्यापचारः *नीवारशब्दोहश्च । यत्र वाचनिकः प्रतिनिधिस्तत्र नोहः यथा पूतीकेषु । यत्र विहितव्रीह्यभावे प्रतिनिधिनीवारमुपादाय प्रयोगप्रक्रान्तौ विहितव्रीहयोपि लभ्यन्ते तत्र व्रीहित्यागेनैव प्रयोगस्समापनीयः । यत्रोपात्तप्रतिनिधिरपि न दृष्टः नीवारा व्रीहयोपि लभ्यन्ते तत्र प्रतिनिधिपरित्यागेन मुख्य एवोपादेयः । सर्वत्र विहितालाभकृतवैगुण्यपरिहारार्थं प्रायश्चित्तमावश्यकम् ॥

ह.—यद्धर्म मुख्यद्रव्यं प्रतिनिहितमपि तद्धर्मकमित्यर्थः । अतः प्रोक्षणादयः प्रतिनिहितेषु नीवारेषु क्रियन्ते । 'व्री-

*इत आरम्य ४खण्डे६सूत्रपर्यन्तं कपर्दिभाष्यकोशे ग्रन्थलोपदर्शनात् तत्स्थाने कपर्दिसारग्रन्थो योजितः.

हीणां मेध' इति चाविकारेण प्रयुज्यते । सान्नाय्यप्रतिनिधित्वेन ऐन्द्रो माहेन्द्रो वा पुरोडाशो नियम्यते तदापि मुख्यधर्मत्वेन स्रुत्रेणैवावदानं पुरोडाशस्य न हस्तेन, प्रतिनिधेर्मुख्यधर्मप्राप्तेः ॥

५३. क.—द्रव्यस्यैकदेशनाशे यावदुक्तपरिमाणाद्यभावेपि अवशिष्टेनैव समाप्नुयात् । यथा कूर्मप्रतिकृतिपुरोडाशे 'चतुरो मुष्टीन्' इत्यादिपरिमाणन्यूनतायामपि मुख्येनैव समापयेत् ॥

ह.—मात्रा परिमाणम् । तदपचारः परिमाणाभावः । स्कन्नावशिष्टेषु व्रीहिषु अश्वशफमात्रस्य पर्याप्तेषु स्कन्नशेषेणैव समाप्नुयादित्यर्थः । यदा तु द्विरवदानमात्रस्य पर्याप्तास्तदा लौकिका व्रीहयस्स्कन्नशिष्टेषु प्रक्षेप्तव्याः । व्रीह्युपादानकाले यस्याश्वशफमात्रा व्रीहयो न लभ्यन्ते तस्यापि मात्रापचारेणैव परिसमाप्तिः । यस्य तु नीवारा अश्वशफमात्रपर्याप्तास्सन्ति व्रीहयो द्व्यवदानमात्रपर्याप्तास्तत्र व्रीहिभिर्नीवारान् संसृज्य निर्वापः कर्तव्यः[1], यावत्सम्भवं मुख्यपरित्यागे कारणाभावात् मुख्यावंयवलाभकृतत्वाच्च प्रतिनिधेः ॥

इति तृतीयः खण्डः

ग—यदा अवदानमात्रस्यापर्याप्ताः व्रीहीन्नीवारांश्च संसृज्य निर्वापः कर्तव्यः [इति 'यदा तु......कर्तव्यः' इत्यस्य स्थाने पाठः.]

## अथ चतुर्थः खण्डः.

१. क–स्वामिनो यजमानस्य पत्न्याश्च, अग्नेराहवनीयादेर्देवतायाः, कर्मणः क्रियायाः, एतेषां प्रतिषेधादेव प्रतिनिधिर्नास्ति । देवतायां शब्दात्मकत्वमपरो हेतुः ॥

ह.–पूर्वोक्तस्य प्रतिनिधेरपवादः प्रतिपाद्यते । स्वामिनो यजमानस्य पत्न्या वा । तत्राङ्गत्वा[1]भावाद्यजमानस्य पत्नीमरणे पत्न्यन्तरोपादानेन वा अपत्नीकत्वेन वा कर्मणः परिसमाप्तिर्नाङ्गीक्रियते । का वार्ता द्विपत्नीके प्रयोगे अन्यतरमरणे तत्र परिसमाप्तिमेव न्यायविदो मन्यन्ते, एकयापि पत्न्या सहाधिकारसिद्धेः, पत्नीकार्यनि[ र् ]वृत्तेश्च । अग्नेराहवनीयादेः । तत्र आहवनीयादेरभावे नाग्न्यन्तरं प्रतिनिधातव्यम् । नाप्युदके वा भूमौ वा होमः । अननुष्ठानमेव मन्यन्ते । एवं देवतापि न प्रतिनिधेया । शब्दात् मन्त्रात् । न मन्त्रे च विस्मृते मन्त्रान्तरं प्रतिनिधेयम् । अमन्त्रकमेव कर्मानुष्ठीयते । कर्मणः प्रयाजादेः । न प्रयाजादेरसम्भवे प्रोक्षणानुष्ठानं प्रतिनिधिः । प्रतिषेधात् ‘अयज्ञिया वै माषा वरकाः कोद्रवाश्च’ इति । न माषादीनां यज्ञे विनियुक्तानां प्रतिषेधोयं, माषादीनां विनियोगाभावात् । न चाविहितद्रव्यतया यज्ञेषु प्राप्तस्य माषादेर्निषेधस्सम्भवति, सर्वत्र यागहोमयोस्सामान्यतो विशेषतो वा आज्यादेर्विनियुक्तत्वात् । सम्भवति माषादेस्सदृशस्य विनियुक्तस्यासम्भवे माषादेः प्रतिनिधित्वेन प्रा-

[1] घ—तत्राशङ्का.

भिः । अतः प्रतिनिधिविषय एवायं 'अयज्ञिया वै माषा वरकाः कोद्रवाः' इत्येवावधारितम् । अतो यदापि वरककोद्रवयोरपचरितद्रव्यसादृश्यं तदापि प्रतिषेधात्ताभ्यां प्रतिनिधिर्निवर्तते । अन्यदेव द्रव्यमीषत्सदृशमप्युपादेयमित्यर्थः । एवं वात्र—प्रतिषिध्यत इति प्रतिषेधः इति कर्मसाधननिर्देशोयं; 'खण्डां कृष्णां लक्षणां च नोपदध्यात्' इति प्रतिषिद्धत्वात्खण्डादेः प्रतिनिधिर्निवर्तते । मुख्येष्टकाभावे खण्डादीनां सम्भवे नाभिरेव चेतव्यं, नाश्मना प्रतिनिहितेन चेतव्यमित्यर्थः । अशृङ्गस्य पशोश्छिन्नकर्णस्यान्धस्य भग्नदन्तस्य वापन्नदन्तस्य वा कूटादियुक्तस्य सम्भवे मुख्यपशोरसम्भवे कृत्वा प्रायश्चित्तं कूटादीनामेवालम्भः । न जात्यन्तरस्य प्रतिनिहितस्येति ॥

२. क.—त्रिभिर्हेतुभिः प्रकृतिपदार्थो निवर्तते । प्रत्याम्नानं कुशस्थाने शरमयं बर्हिः । प्रतिषेधो 'नार्षेयं वृणीते' इत्यादौ । अर्थलोपात् चरौ पेषणादीनि । चकारादन्यदपि त्रयं निवृत्तिकारणं; नियमः परिसङ्ख्या भूतोपदेश इति । यथा—व्रीहियवयोर्विकल्पेन प्राप्तयोः, 'व्रीहिमयः पशुपुरोडाशो भवति' इति नियमाद्यवत्यागः । गृहमेधीये 'आज्यभागौ यजति' इति परिसङ्ख्यानात् प्राप्तप्रयाजादेर्निवृत्तिः । 'खलेवाली यूपः' इति छिन्ननिखातखलेवालीविधानाच्छेदनादेर्निवृत्तिः ॥

ह.—प्रत्याम्नानं प्रकृतिप्राप्तस्यार्थस्य स्थाने अर्थान्तरोपदेशः । प्रतिषेधः 'नार्षेयं वृणीते न होतारम्' इति । अर्थः

प्रयोजनं तदसम्भवात् । 'शरमयं बर्हिः' इति प्रत्याम्नानस्योदाहरणम् । अर्थलोपाच्चरौ पेषणादिनिवृत्तिः । अपरे—अन्यत्त्रयं निवृत्तिकारणमाहुः; नियमः परिसङ्ख्यानं भूतोपदेश इति । यथा—विकल्पेन व्रीहियवयोः 'व्रीहिमयः पुरोडाशः' इति पुनर्नियमविधानाद्यवनिवृत्तिः । गृहमेधीये आज्यभागादिषु प्राप्तेषु पुनराज्यभागाविधानं परिसङ्ख्यायते प्रयाजादिनिवृत्त्यर्थम् । 'खलेवाली यूपः' इति यूपकार्ये खलेवालीविधानाच्छेदनादिनिवृत्तिः । त्रिभिरिति निवृत्तिकारणनियमादेव तेषामपि तत्रैवान्तर्भावः । पशुपुरोडाशे प्रत्याम्नानादेव निवृत्तिः । गृहमेधीये पुनर्विहितपदार्थकार्येणैव कथंचिदङ्गपूर्तेः अर्थलोपादेवेतरनिवृत्तिः । 'छिन्नं तष्टमुच्छ्रितं निखातं च काष्ठं खलेवाली' इति तत्रार्थलोपादेव छेदनादीनां निवृत्तिः ॥

३. क.—एकेनाह्ना येषु सुत्यापरिसमाप्तिस्त एकाहाः । तेषामग्निष्टोमसंस्थो ज्योतिष्टोमः प्रकृतिः । प्रकृतेर्धर्मान् कार्यमुखेन विकृतिर्गृह्णाति ॥

ह.—एकेनाह्ना सुत्यापरिसमाप्तिः येषां त एकाहाः । तेषामग्निष्टोमसंस्था ज्योतिष्टोमः प्रकृतिः । स एव उक्थ्यादिसंस्थानां विकृतीनां प्रकृतिः । प्रकृतिधर्मान्कार्यमुखेनैव विकृतिर्गृह्णाति ॥

४. क.—इहाहश्शब्दो रात्रिशब्दश्च सोमयागवचनः । द्वादशाहानि यागा यस्य स द्वादशाहः । अह्नां यागानां

गणोहर्गणः । गणस्सङ्घः । ते ह्युभयात्मकाः अहीनात्मकास्सत्रात्मकाश्च । द्विरात्रप्रभृतय एकादशरात्रान्ता अहीनात्मकाः । त्रयोदशरात्रप्रभृत्याशतरात्रात्सत्रात्मकाः । तेषां द्वादशाहः प्रकृतिः ॥

ह.–अहश्शब्दो रात्रिशब्दश्च सोमयागवचनः । द्वादश अहानि यागा यस्य स द्वादशाहः । स उभयात्मकः अहीनात्मकस्सत्रात्मकश्च । अह्नां यागादीनां गणोहर्गणः । तेष्युभयात्मकाः अहीनात्मकास्सत्रात्मकाश्च । द्विरात्रप्रभृत्येकादशरात्रान्ता अहीनात्मकाः । त्रयोदशरात्रप्रभृत्याशतरात्राद्गवामयनं च एतत्प्रभृत्याविश्वसृजामयनाच्च सत्रात्मकाः । तत्राहीनात्मकोऽहीनात्मकानां प्रकृतिः । सत्रात्मकानां सत्रात्मकः प्रकृतिः ॥

५. क.–'संवत्सराय दीक्षिष्यमाणाः' इति विहितेतिकर्तव्यताकं गवामयनं सर्वेषामयनानां प्रकृतिः ॥

ह.–'संवत्सराय दीक्षिष्यमाणाः' इति विहितेतिकर्तव्यताकं गवामयनम् । तत् सांवत्सरिकाणां संवत्सर एको बहवो वा परिमाणं येषां तेषां सत्राणां प्रकृतिरिति ॥

६. क.–निकायस्सङ्घो येषां ते निकायिनस्सद्यस्कालादयः । तेषां प्रथमोग्निष्टोमः प्रकृतिः ॥

ह–निकायिनस्तुल्यनामधेया अभिन्नफलाः क्रतवः । यथा 'चत्वारस्साद्यस्क्राश्चत्वारस्साहस्राः' इति । तेषां प्रथम उत्तरेषां प्रकृतिः ॥

७.* क.–स तु चतुस्संस्थो ज्योतिष्टोम[1] अग्निष्टोमः। उत्तरेषु क्रतुष्वग्निविधानात् तत्र प्रकरणाम्नातोत्तरवेदिः। तत्राहवनीयः प्रणीयते। उत्तरेषु क्रतुषु अग्निष्टोमोत्तरकालकार्येषु साद्यस्क्रादिभ्योन्यत्र अग्निष्टुज्ज्योतिष्टुदादिविकृतिष्वनारभ्याधीतोग्निश्चीयते। चितावाहवनीयप्रणयनम्। तेषूत्तरवेदिरपि लभ्यते। 'साग्निचित्यो भवति पक्षिभ्यां साग्निचित्याभ्यां' इति क्वचिन्नियमविधानादन्यत्रानियम इति केचिदाहुः। 'उत्तरवेद्यां ह्यग्निश्चीयते' इत्यनारभ्याधीतोग्निरुत्तरवेदिद्वारेण प्रकृतिं गच्छति, यथा स्रुवद्वारेण खदिरः। तत्राग्निचयनेन प्रकृताववरुद्धायां बह्वृचवचनात् 'अग्निर्वै देवानां होता तस्यैष स्वो लोको य उत्तरनाभिः' इति प्रणेयोग्निरुत्तरनाभौ प्रतिष्ठाप्यः। एवमुत्तरवेद्यन्तःप्रत्यायित[2]मग्निचयनं विकृत्यर्थं भविष्यति साप्तदश्यवत्। तदाह–'अग्निष्टोम उत्तरवेदिरुत्तरेषु क्रतुष्वग्निः' इति। तत्रैवाग्निष्टोमसंस्थे ज्योतिष्टोमे वचनादग्निचयनं भविष्यति। 'अथातोग्निमग्निष्टोमेनानुयजन्ति तमुक्थ्येन तमतिरात्रेण तं द्विरात्रेण तं त्रिरात्रेण' इति। अतः प्रकृतावेवाग्निचयनोत्तरवेद्योर्विकल्पितयोः प्रकृतिवद्विकृतिष्वपि विकल्पः। अत एव[3] सर्वत्र विकृतिषु विकल्पप्रसक्तौ 'साग्निचित्यो भवति। पक्षिभ्यां साग्निचित्याभ्याम्' इति नियमविधिरुपपद्यते व्रीहिमयपशुपुरोडाशवत्। द्विरात्रादिष्वग्निचयनविधानं औपदेशिकत्वेन गुणकामादिसिद्ध्यर्थमिति॥

---

*इत आरभ्य कपर्दिभाष्यकोशगतो ग्रन्थः हरदत्तवृत्तिकोशग्रन्थात् शब्दतोर्थतश्च नातिरिच्यते. क्वचिदेव तु वर्णमात्राभेदः. अतः कपर्दिभाष्यमेवात्र गृहीतम्.

[1]ह–स तु ज्योतिष्टोमः [2]क-सा–प्रस्थापित. ह–त्तरवेद्यां तत्र प्रच्यावित. [3]ह–एवं.

८. क.—स चाग्निष्षोडशिनि तद्विकारे च वाजपेये असङ्कीर्तनान्न भवति । साद्यस्क्रेषु सद्यःपरिसमाप्तेरसम्भवाच्चयनाभावः । सारस्वते सत्रे अनवस्थानान्नाग्निश्चीयते । अत एतेभ्योन्यत्रोत्तरेषु क्रतुष्वग्निः ॥

९. क.—काम्यत इति कामः फलम् । क्रतुफलस्य कामो वर्तमानः क्रतुं प्रयुङ्क्ते, न भूतो न भविष्यन् । न च कामयेत इति विधिः, स्वतस्सिद्धत्वात् । यतः क्रत्वादौ वर्तमानः क्रतुं प्रयुङ्क्ते अतस्तत्सङ्कल्पः क्रत्वादौ कर्तव्यः ॥

१०. क.—कामयेतेत्यनुवर्तते । क्रतुकामवद्यज्ञाङ्गकामोपि भवति । यज्ञाङ्गादौ वर्तमानो यज्ञाङ्गं प्रयुङ्क्ते । अतो यज्ञाङ्गफले सङ्कल्पस्तदादौ कर्तव्यः ॥

११. क.—यत्राल्पीयांसो मन्त्राः कर्माणि भूयांसि; यथा काम्यानामिष्टीनां 'उभा वामिन्द्राग्नी' 'इन्द्राग्नी नवतिं पुरः' इति याज्यानुवाक्यायुगळमाम्नातम् । 'ऐन्द्राग्नमेकादशकपालम्' इति षडाम्नातानि । तद्युगळद्वयं समशः प्रविभज्य कर्माणि च पूर्वेण युगळेन पूर्वाणि त्रीणि कारयेत्, उत्तरैरुत्तराणि । एवं 'विहव्या उपदधाति' इति विहिता दशमन्त्राः । धिष्ण्येष्टकोपधानकर्माणि बहूनि । तत्र समशः प्रविभज्य पूर्वैः पूर्वाणि कारयेदुत्तरैरुत्तराणि ॥

१२. क.—अग्नौ चतुर्दशौषधिवपनकर्माणि । 'या जाता ओषधयः' इति वपनार्था मन्त्रा बहवः । तत्रादितो मध्यतोन्ततो वा अव्यवहितैश्चतुर्दशभिर्मन्त्रैः प्रतिमन्त्रं प्रथमेन मन्त्रेण प्रथमवपनं द्वितीयेन द्वितीयमिति । एवं चतुर्दश वपनानि कुर्यात् । अवशिष्टा विकल्पार्थाः प्रयोगान्त-

रेर्थवन्तः यथा यूपद्रव्याणि पलाशाद्याम्नातानि विकल्प्यन्ते पशुबन्धे । इतिकरणं दृष्टान्तान्तरप्रदर्शनार्थम्—व्रीहियववच्च विकल्प इति ॥

१३. क.—यत्रातिदेशप्राप्तानां मन्त्राणां बहुत्वं, कर्मणामल्पत्वं, तत्रादित आरभ्य प्रवृत्तेरन्तादारभ्य लोपः । आश्विने द्विकपाले आद्याभ्यां मन्त्राभ्यां कपालोपधानम् । उत्तरेषां लोपः । तैः कर्म न क्रियते । ऋतव्यमन्त्रैः हौत्रियधिष्ण्योपधाने कर्तव्ये, इष्टकानां द्वादशपक्षे, तेषां मन्त्राणां संविभागे च पञ्चमदशमयोर्द्विरावृत्तिः, षोडशपक्षे चतुरावृत्तिः कर्तव्या ॥

१४. क.—प्रकृतेः प्रकृत्यङ्गस्य क्लृप्तक्रमस्य प्रधानप्रयोगवाक्यविहितत्वात् तत्प्राकृतं यथाक्रमं पूर्वं प्रयोक्तव्यम् । अपूर्वमक्लृप्तक्रमं तुल्यजातीयानामन्ते स्यात्, यथा 'सोत्र जुहोति' इति सर्वहोमानामन्ते प्राक्स्विष्टकृतः ध्रुवाज्यलाभाय[1] ॥

१५. क.—एकजातीयपशुगणे कुम्भीशूलवपाश्रपणीनां तन्त्रता एकता स्यात् । प्रभुत्वात् समर्थत्वात्[2] । कुम्भी श्रोण्यादिपाकार्था बृहती स्थाली । शूलो हृदयपाकार्था यष्टिः । वपाश्रपणी वपाश्रपणार्थे यष्टी द्वे । तेषां प्रभुत्वात्तन्त्रता । प्रभुत्वादिति हेतुनिर्देशाद्यावत्सम्भवं तन्त्रत्वम् । केचित् याज्याया अर्धर्च इति च प्रतिपशु बर्हींषि वपाश्रयण्य इति वचनादेकदैवतेषु तन्त्रत्वमिच्छन्ति[3] ॥

---

[1]ह—...कृतः समिष्टयजुषोप्यन्तलाभाय. [2]ह—त्वात् पशुधर्माणां.

[3]ह—वपाश्रपण्यो यष्टयः । तेषां प्रभुत्वात्तन्त्रतेति हेतुवचनं बहुत्वादप्रभुत्वे कुम्भीभेदज्ञापनार्थम् । तथा अनेकेषु गृहेषु दग्धेषु तन्त्रेणैव क्षामवत्यनुष्ठानम् । तथा मिथस्संसर्गेषु पुत्रजन्मादिषु बहुषु तन्त्रत्वं नैमित्तिकानाम् ।

१६. क.—जातिभेदे पशुजातिभेदे सौत्रामण्यादौ कुम्भ्यादि भिद्यते, प्रतिपशु कुम्भ्यादिभेदः । पक्तिवैषम्यात्—पक्तिः पाकः तस्य वैषम्यमसमानत्वम् । पक्तिवैषम्यादिति हेतुनिर्देशात् एकस्यामपि जातौ बाल्ययौवनस्थविरवशेन यत्र पक्तिवैषम्यं तत्र कुम्भ्यादिभेदः ॥

ह.—'अग्निभ्यः कामाय' इति पञ्च पशव उदाहरणम् । तत्र जातीनां [ तत्राजादीनां ] पक्तिवैषम्यात्कुम्भ्यादयोपि भिद्यन्ते ॥

१७. क.—स्विष्टकृद्वनस्पतौ वनस्पतियागे[1] या याज्यातस्यां देवतानिगमा देवतासङ्कीर्तनानि स्युः यद्यप्यनाम्नाता देवतानिगमाः । कुतः ? प्रकृत्युपबन्धात्, प्रकृतौ स्विष्टकृति उपबन्धात् आम्नानात् । दर्शपूर्णमासयोस्स्विष्टकृद्यागे इष्टदेवतासङ्कीर्तनैः कश्चिदुपकारः कल्पितः । स पशोस्स्विष्टकृद्विकारे वनस्पतियागेपीष्टदेवतानिगमैः कार्यः । प्रकृत्युपबन्धादिति हेतुनिर्देशादन्योपि स्विष्टकृद्धर्मो द्विरभिघारणादिः कर्तव्यः ॥

१८. क.—दर्शपूर्णमासावारभमाणस्य पुरुषस्यान्वारम्भणीया कर्तव्यत्वेन चोदिता । यदि सा दर्शपूर्णमासावारभमाणेन कर्तव्या स्यात् 'दर्शपूर्णमासावालभमानः' इति श्रुतिर्वृत्ता ; तस्याः फलान्तरं कल्प्यम्[2] । न चासावन्यनिमित्ते ततः[3]

---

[1]ह—स्विष्टकृद्याज्याविकारे वनस्पतौ.

[2]क. सा.—यदि सा दर्शपूर्णमासार्था ततो दर्शपूर्णमासावारभमाणेन कर्तव्या स्यात् । न च दर्शपूर्णमासफलातिरिक्तं फलं स्यात् ।

[3]क-सा—स्य निमित्तवतः.

फलान्तरकामिनो वापि विहिता । यदि न दर्शपूर्णमासार्था ततो 'दर्शपूर्णमासावालभमानः' इति पुरुष[1]लक्षणा स्यात्, अश्रुतं फलं च कल्पनीयं; यथा पाकमारभमाणः काष्ठानि सङ्गृह्णीयात् इत्युक्ते, काष्ठसङ्ग्रहः पाकार्थ इति गम्यते, यदि न पाकार्थः काष्ठसङ्ग्रहस्तस्य प्रयोजनान्तरं कल्पनीयम् । आरभमाण इति पुरुषलक्षणा स्यात् । अतोऽन्वारम्भणीया दर्शपूर्णमासार्था । सैवं दर्शपूर्णमासार्था तद्विकृतेस्सौर्यादेरपि चोदकेन प्राप्ता शेषभूता च प्रधानानुष्ठाने चानुष्ठेया । सान्वारम्भणीया विकृतौ न स्यात्, विकृत्यनुष्ठाने नानुष्ठेया । कुतः? प्रकृतिकालमध्यत्वात्—प्रकृतेः कालः प्रकृतिकालः । तस्य कालो विकृतेरपि कालः, प्रकृतिकालमध्यत्वाद्विकृतेः । प्रकृतिकालमध्यवर्तनं वा विकृतेः कथम्? 'यावज्जीवं दर्शपूर्णमासाभ्यां यजेत' इति जीवनावच्छिन्नः कालो दर्शपूर्णमासयोः कालत्वेन विहितः । तत्रैव विकृतीनामुपदेशः; न ह्यजीवन्किञ्चित्करोति; न हि दर्शपूर्णमासौ परिसमाप्य विकृतीनां कालोस्तीति; अजीवतः कारणाभावात्; यावज्जीवं दर्शपूर्णमासाभ्यामिति जीवनपरिच्छिन्नकालेन दर्शपूर्णमासौ परिसमाप्येते इति विधेः नान्तरा परिसमाप्येते । अतः प्रकृतिभूतदर्शपूर्णमासयोः कालमध्यवर्तित्वं विकृतीनाम् । ननु अकृताऽन्वारम्भणीया कार्यप्रदर्शनेन[2] कथं विकृतीनामुपकरोतीत्यत्राह—कृता हि तदर्थेन । प्रकृतौ तदर्थेन प्रकृत्यर्थेन कृता ह्यन्वारम्भणीया सा तत्कालमध्यवर्तिनीनां विकृतीनामपि प्रसङ्गादुपकरोतीति न विकृत्यर्थं

[1] क-सा—पुरुषपदे. [2] ह—कार्यप्रदानेन.

पृथगनुष्ठेया । सवनीयपशोः कृताः प्रयाजादयः तत्कालवर्तिनां सवनीयानां प्रसङ्गादुपकुर्वन्ति, यथा जामदग्न्ये चतूरात्रे[1], यथा च राजमार्गे रात्रौ कृतः प्रदीपः तत्काले भुञ्जानानामप्युपकरोति । एवं प्रकृत्यर्थे कृताऽन्वारम्भणीया तत्कालमध्यवर्तिनीनां विकृतीनामुपकरोति । तस्मात् विकृतौ न स्यात् नानुष्ठेया ॥

१९. क.–वाशब्दोवधारणे । स्यादेवान्वारम्भणीया, विकृतौ कर्तव्यैव । कुतः? कालस्याशेषभूतत्वात्—प्रकृतयोर्दर्शपूर्णमासयोरशेषभूतः कालो जीवनपरिच्छिन्नः, तादृशकालस्य विधायकवाक्याभावात् । 'दर्शपूर्णमासाभ्यां स्वर्गकामो यजेत' इति स्वर्गकामस्य दर्शपूर्णमासौ विधाय 'यावज्जीवं दर्शपूर्णमासाभ्यां' इति जीवनश्रुत्या सिद्धजीवनं निमित्तत्वेनोपादाय. तत्त्वतस्स्वर्गकामादन्यस्य दर्शपूर्णमासौ विधीयेते इति जीवितावश्यं दर्शपूर्णमासौ कर्तव्यौ स्वकालेऽकुर्वतः प्रत्यवाय इति यावज्जीववाक्यार्थः । यदि यावज्जीववाक्येन जीवनपरिच्छिन्नः कालस्स्वर्गकामस्य दर्शपूर्णमासयोर्विधीयेत, ततो जीवनशब्देन तत्परिच्छिन्नः कालोऽत्र कथ्यते[2]। जीवनशब्दस्य श्रुत्या जीवनं निमित्तत्वेन ब्रुवतो न काललक्षणा न्याय्या । न वान्यज्जीवनपरिच्छिन्नकालविधायकवाक्यमस्ति । कालश्च विहितो 'अमावास्यायाम-

---

[1] हरदत्तीये सारे वा इदमुदाहरणं नास्ति.

[2] ह—......सोपादाय तद्वतस्स्वर्गकामस्य दर्शपूर्णमासौ विधीयेते, यावज्जीवशब्देन तस्य जीवनपरिच्छिन्नकालो लक्ष्यते.

मावास्यया यजेत । पौर्णमास्यां पौर्णमास्या' इति । अमावास्यायागोमावास्यायां पञ्चदश्यामुपक्रम्य प्रतिपदि समाप्यः । पौर्णमासीयागश्च पौर्णमास्यां पञ्चदश्यामुपक्रम्य प्रतिपदि समाप्यः । अतो न विकृतेः प्रकृतिकालमध्यत्वम् । अतो विकृत्यर्थमन्वारम्भणीया स्यादेव अनुष्ठेयैव ॥

२०. क.—चकारेण विकृतौ स्यादेवान्वारम्भणीयेत्येतदपकृष्यते । दर्शपूर्णमासावारभमाणस्य अन्वारम्भणीया विहिता । आरम्भश्च तयोर्दर्शपूर्णमासाभ्यां यक्ष्ये इति निश्चयपुरस्सरस्सङ्कल्पः । स चान्वा[1]धानक्रमः । स चारम्भो[2] 'यावज्जीवं दर्शपूर्णमासाभ्यां यजेत' इति शास्त्रान्तरविहितयावज्जीवदर्शपूर्णमासप्रयोगाणामाधानानन्तरमादितस्सकृदेव भवति, आरब्धदर्शपूर्णमासत्वात् । न चैव विकृतीनामारम्भः, तासां कर्मभेदान्निमित्तभेदाच्च । स्वर्गकामस्य तन्नि[3]मित्त आरम्भः प्रकृत्यारम्भाद्विभक्तः । कामनिमित्तभेदादेव विकृतीनां परस्परं चान्वारम्भविभागः । तस्मात् आरम्भविभागाच्च विकृतावन्वारम्भणीयानुष्ठेया ॥

अत्र केचिदाहुः—विकृतिष्वन्वारम्भणीया न कर्तव्या । सा हि सर्वदर्शपूर्णमासार्था तत्प्रयोगाद्बहिरेवादितः प्रयुज्यते । सा ह्यपूर्वात्मना दर्शपूर्णमासयोरुपकरोति । जरामरणाद्यावत्तिष्ठति[4] । न प्रयोगमध्ये कृतप्रयाजाद्यपूर्ववत्प्रतिप्रयोगं परिसमाप्यते । तदन्वारम्भणीयापूर्वमनुपसंहृतं प्रकृतेरिव विकृतीनामप्युपकरोति । कथमन्यार्थं कृतमन्यस्योपकरोति ?

---

[1] क—सा. न चान्वा. ह-नान्वा. [2] क—सा, ह—स चान्वारम्भो.
[3] ह—......भेदाच्च । स कामनि. [4] ह—अजरा यावज्जीवं तिष्ठति.

इति चेत्, अत एव प्रसङ्गः—यथा सवनीयपशुना सवनीयानां न कश्चित्सम्बन्धः तथापि पश्वर्थं कृतं प्रयाजाद्युपूर्वमनुपसंहृतं सवनीयानां पशुपुरोडाशानां प्रसङ्गादुपकरोति । एवं प्रकृत्यर्थं कृताऽन्वारम्भणीया विकृतीनामप्युपकरोतीति ॥

अपर आह—त्वैमृधान्वारम्भणीये दर्शपूर्णमासविकारौ तत्स्थं क्लृप्तमुपकारमाकाङ्क्षेते । तौ च दर्शपूर्णमासौ तयोरुपकाराकाङ्क्षायां तत्साध्यरहितमेवोपकारं कल्पयित्वा तयोरन्यासां च विकृतीनां प्रयच्छतः । ततो विकृतिष्वन्वारम्भणीया न कर्तव्येति ॥

एवं तु युक्तायुक्तत्वेन सूत्रत्रयेण हेतून्वदतस्सूत्रकारस्याभिमतानभिमतत्वेन च[1] विचारणीयम् ॥

२१. क.—अर्थशब्दः प्रयोजनवाची । प्रयोजनं चाग्निसाध्यविहितकर्मानुष्ठानम् । तादर्थ्ये चतुर्थी । वीप्सा च विहितकर्मानुष्ठानव्याप्त्यर्था । तस्य तस्य कर्मणोनुष्ठानार्थं गार्हपत्यादिभ्य आहवनीयाग्निं[2] प्रणयेत् । न हि सकृत्प्रणीत एव सर्वकर्माणि साधयति । यत्र यो यदर्थं प्रणीतस्तस्मिन्कर्मण्यपवृत्ते परिसमाप्ते सोग्निर्लौकिकस्सम्पद्यते लौकिको भवति न शास्त्रीयाहवनीयादिः, यथा समारूढः । द्विविधो ह्यग्निः, एकः प्रत्यक्षदृश्यः, अपरस्तत्रैव संस्कारात्मको देवताभूतः । तयोस्संपृक्तं रूपं विहितकर्मकारकं नैकैकम् । तत्रारण्योर्देवतात्मके समारूढे इतरस्तद्रहितो म-

---

[1] ह—न.

[2] ह—नीयार्थमग्निं.

हानसाग्निसदृशो लौकिकव्य[1]पदेशं लभते। समारोहणावरोहणविधानात्, 'तं जानन्नग्न आरोह' 'उपावरोह जातवेदः' इति मन्त्रलिङ्गाच्च देवताभूतोग्निः प्रत्यक्षदृश्यमङ्गारमग्निं परित्यज्यारण्योरारोहति मथ्यमानमङ्गारमवरोहतीति गम्यते। तथा प्रत्यक्षात्प्रणीताग्नेः देवतात्मकोग्निरपवृत्ते कर्मणि परिसमाप्ते स्वयोनिं गार्हपत्यादिं गच्छति, न परप्रयुक्ताग्न्युपजीविकर्मापवर्गे। यदर्थं प्रणीत एतस्मिन्नपवृत्त इत्युक्तम्। यथा दर्शपूर्णमासार्थं प्रणीतोग्निस्तस्मिन्नग्निहोत्रापवर्गेपि नापवृत्तः। यदर्थं प्रणीतस्तदपवर्गो यावत्तावत्तिष्ठति, 'अपवृत्ते कर्मणि लौकिकः' इत्युक्तत्वात्। आहवनीयादिसाध्यकर्मार्थमेवाग्निप्रणयनम्। न लौकिकाग्निसाध्यदहनपचनार्थं प्रणयेत्। तस्माद्विहितकर्मार्थमेवाग्निप्रणयनमिति। यथा लौकिकाग्नेरेव दक्षिणाग्नेः प्रणयनम् गार्हपत्यादाहवनीयस्याहवनीयादौत्तरवेदिकस्य आग्नीध्रस्य शामित्रस्य च दक्षिणाग्नेर्महापितृयज्ञार्थं त्रैयम्बकहोमार्थं चेति। एवमादि तत्र तत्र द्रष्टव्यम्। यत्र प्रणीतस्याग्नेः पुनः प्रक्षेपविधिस्तत्र कर्मापवर्गे न लौकिकः, यथा पशुपर्यग्निकरणार्थस्याग्नेः प्रत्यपिसृज्योल्मुकमिति। यस्य प्रयोजनं नास्ति, न तस्य प्रणयनं, यथा दक्षिणाग्नेर्दर्शपूर्णमासार्थे होमे सारस्वते[2]॥

इति चतुर्थः खण्डः.

समाप्ते च परिभाषाभाष्यवृत्ती.

---

[1]क—सा. लौकिकोपि ड.

[2]ह—यत्र प्रणीतस्याग्नेः कर्मचोदना तत्र अपवृत्ते कर्मणि न लौकिको भवति. यथापर्यग्निकरणार्थस्याग्नेः प्रत्यपिसृज्योल्मुकमिति तस्य प्रतिनयनं कर्तव्यम्.